कपिकन्दुकम् । न । शिरोस्थिनि ॥

कपिका । स्त्री । नीलसिन्दुवारवृक्षे ॥

कपिकेतनः । पुं । अर्जुनाख्यपाण्डवे ॥ कपि. केतन चिह्नमस्य ॥

कपिकोलि. । पु । कोलिविशेषे ॥

कपिचूडा । स्त्री । आम्रातकवृक्षे ॥

कपिचूत. । पुं । आम्रातके । आम्डा इतिभाषा ॥

कपिज. । पुं । तुरुष्के । सिल्हके । शिलारस इति गौडभाषा । नागौरी गूद इति भाषा ॥

कपिजाङ्घिका । स्त्री । तैलपिपीलिकायाम् ॥

कपिञ्जल. । पुं । तित्तिरौ ॥ कपिञ्जल इतिप्राज्ञैः कथितो गौरतित्तिर ॥ कपिञ्जल इतिख्यातो लोके कपिश्च तित्तिर इतिच ॥ चातकखगे ॥ ते जलेपक्षिणि ॥

कपितैलम् । न । तुरुष्कनामगन्धद्रव्ये । सिल्हके । नागौरीगूदइतिभाषा॥

कपित्थ । पु । कैथ इति प्रसिद्धेवृक्षे । कुचफले ॥ कपित्थोथदधित्थस्तु ग्राही फलसुगन्धक. । अत्यम्लोदधिफल श्चिरमाली कपिप्रियः ॥ कपित्थमामं सङ्ग्राहि कषायंलघुलेखनम् । पक्वं गुरु तृषाहिक्काशमनंवातपित्तजित् ॥ स्वाद्वम्लं तुवर कण्ठशोधनं ग्राहि दुर्जरम् ॥ अपिच । कपित्थमाम कण्ठघ्नं विशदग्राहि वातलम् । मधुराम्लकषायत्वात् सौगन्ध्याच्च रुचिप्रदम् ॥ कपयस्तिष्ठन्त्यत्र । कपिरिवतिष्ठतिवा । सुपिस्थ इतिक. । पृ० ॥

कपित्थत्वक । पुं । एलवालुके ॥

कपित्थपर्णी । स्त्री । कपित्थानीति गौडभाषाप्रसिद्धे वृक्षविशेषे । विरजायाम् । चित्रपर्णाम् ॥

कपित्थास्य । पु । वानरविशेषे । गोलाङ्गूले । दधिशोणे । नगाटने ॥

कपिध्वज । पुं । हनुमता महावीरेण ध्वजरूपतयाऽनुगृहीते अर्जुने ॥ कपिर्हनूमान् ध्वजे अस्य ॥

कपिनामा । पु । सिल्हके ॥ कपिर्नामास्य ॥

कपिपिप्पली । स्त्री । रक्तापामार्गे । वशिरे ॥ सूर्यावर्त्तवृक्षे ॥

कपिप्रभा । स्त्री । कपिकच्छ्वाम् ॥

कपिप्रभु । पु । रघुनाथे । श्रीरामे ॥ कपीनां सुग्रीवादीनां प्रभु. ॥ कपिराजे ॥

कपिप्रियः । पुं । आम्रातके ॥ कपित्थे ॥ कपीनां प्रियः ॥

कपिप्रिया । स्त्री । चिञ्चायाम् । तिन्तिडीकायाम् ॥ कपीनां प्रिया ॥

कपिरथ. । पु । श्रीरामे ॥ अर्जुने ॥

कपि रव रवे वा कस्य ॥

कपिलः । पुं । अनले ॥ वासुदेवे । सिद्धेषु भगवतोऽंशविभूतिविशेषे देवहूत्यां कर्दमप्रजापतेराविर्भूते ॥ सिद्धानां कपिलो मुनिरिति भगवदुक्ते ॥ अयञ्च सांख्यभक्तिसेश्वरसांख्ययोगप्रचारको भगवदवतारः ॥ अनीश्वरसांख्यमतप्रवर्त्तके च मुनिविशेषे ॥ कुक्कुरे ॥ दानवविशेषे ॥ पिङ्गले वर्णविशेषे ॥ नीलपीतः कपिलः इति रभसः ॥ कपिलो रोचनाछविरित्यन्ये ॥ त्रि । पिङ्गलवर्णयुक्ते ॥ कबते । वर्णते । कपे पश्चेति इलच प्रत्ययः ॥ मत्वर्थे सिध्मादित्वाल्लचा ॥

कपिलद्युतिः । पुं । सूर्य्ये ॥

कपिलद्राक्षा । स्त्री । गोस्तन्याम् । द्राक्षायाम् ॥

कपिलद्रुम । पुं । सुगन्धिकाष्ठविशेषे ॥

कपिलधारा । स्त्री । गङ्गायाम् । स्वर्ग्गायाम् ॥ तीर्थविशेषे ॥

कपिलपुराणम् । न । कापिलोपपुराणे ॥

कपिलशिंशपा । स्त्री । शिंशपावृक्षविशेषे । पीतायाम् । कृष्णशिंशपायाम् ॥

कपिला । स्त्री । गोविशेषे । स्वर्णवर्णायामपि ॥ कपिलवर्णगोमात्रे । अनुराधानामनक्षत्रदिक्करिण्याम् ॥ भस्मगर्भायाम् । कपिलवर्णपुष्पायां शिंशपायाम् ॥ भद्रगन्धिन्यौषधौ । रेणुकायाम् ॥ कपिलो वर्णोऽस्त्यस्याः । अर्श आद्यच् ॥ पुण्डरीकदिग्गजकरिण्याम् ॥ नदीविशेषे ॥ यथा । कज्जलाचलशैलात्तु पूर्वस्मिन् शुभ्रपर्वते । यथा सच पुरा देवैश्च यज्ञः सुरेश्वरः ॥ ततः पूर्वस्मात् भवा देवी नदीकपिलसंज्ञिता ॥ तस्याः स्नात्वा नरो गङ्गास्नानजं फलमाप्नुयात् इति कालिकापुराणे ८१ अध्याय ॥

कपिलाक्षी । स्त्री । कपिलशिंशपायाम् ॥ मृगेर्वारौ ॥

कपिलाचार्य्यः । पुं । वासुदेवे ॥ कपिलाख्यः सौ । साङ्ख्यस्य शुद्धात्मतत्त्वविज्ञानस्य आचार्य्यश्च ॥

कपिलाश्व । पुं । विरोचनसि । इन्द्रे ॥

कपिलोमफला । स्त्री । कपिलाक्ष्याम् ॥

कपिलोमा । स्त्री । रेणुकायाम् ॥

कपिलोहम् । न । पित्तले ॥

कपिल्लिका । स्त्री । गजपिप्पल्याम् ॥

कपिवक्त्रः । पुं । नारदे ॥

कपिवल्लभ । पुं । आम्रातके ॥

कपिवल्ली । स्त्री । करिपिप्पल्याम् । कोलवल्याम् ॥ कपिरिव वल्ली तन्तुवत् रोमत्वात् ॥

कपिशः । पुं । सिह्लकनामगन्धद्रव्ये ॥

श्यावे । कृष्णपीतमिश्रितवर्णे ॥ त्रि । तद्वर्णयुक्ते ॥ कपिर्वर्णविशेषोऽस्या स्ति । लोमादित्वात् श ॥ विरक्तसन्ध्याकपिशमिन्द्वाय कपिशं ताम्रमिति मल्लिनाथ. ॥

कपिशा । स्त्री । माधव्याम् । माधुरीसुरायाम् ॥ नदीविशेषे ॥ टाप् ॥

कपिशाञ्जन । पु । शिवे ॥

कपिशापुत्र. । पु । पिशाचे ॥

कपिशी । स्त्री । माधव्यामदिरायाम् ॥

कपिशीका । स्त्री । मदिरायाम् ॥ इति त्रिकाण्डशेष. ॥

कपिशीर्षम् । न । कपशीर्षे । प्राकाराग्रे ॥

कपिशीर्षकम् । न । हिङ्गुले ॥ लोक कपशीर्षके । प्राकाराग्रे ।

कपिष्ठल. । पुं । ऋषिविशेषे ॥ कपिष्ठलोगोत्र इतिनिपातनात् षत्वम् ॥

कपीज्य । पु । क्षीरिकावृक्षे ॥

कपीतः । पु । श्वेतगुञ्जावृक्षे ॥

कपीतन. । पु । गर्दभाण्डे ॥ शिरीषवृक्षे ॥ आम्रातके ॥ अश्वत्थे ॥ पूगवृक्षे ॥ मालूरवृक्षे । बिल्वे ॥ तनोति । तनुविस्तारे । पचाद्यच । कपीनाम् कपेर्वर्णस्य वा तन. । अन्येषामपी तिदीर्घ. ॥ यद्वा । या. सम्पया. तनः ईतनः । कपीना कृपेर्वा ईतनः ॥

कपीन्द्र' । पु । हनूमति ॥ सुग्रीवे ॥ राघवे ॥ वराहमूर्तौ ॥ कपिश्चासाविन्द्रश्च । कपीनामिन्द्रो वा ॥

कपीश । पु । हनुमति ॥ कपीश मक्ष हन्तारं वन्दे लङ्काभयङ्करम् ॥ कपीनामीश ॥

कपीष्ट. । पुं । राजादनवृक्षे ॥ कपित्थे ॥

कपूय । त्रि । कुत्सिते ॥ कुत्सितं पूयते । पूयी विसरणे । पचाद्यच् । पृषोदरादि. ॥

कपूयचरण. । त्रि । दुष्कृतिनि । कुत्सितकर्मणि ॥ कपूयं निन्दितं चरणं कर्मास्य ॥

कपोत । पु । पारावते । कबरवे ॥ कपोतको गुरु' स्निग्धो रक्तपित्तानिलापहः । सङ्ग्राही शुक्रलः शीतः सुस्वादूरुचिकारक. ॥ घुघुतौं इति प्रसिद्धे चित्रकण्ठविहङ्गमे । धूसरे । धूम्रलोचने ॥ कस्य वायो' पोत इव । कोवायु पोतो नौरिवास्य वा ॥ यद्वा । कवते । कवृवर्णे । कबेरोतच् पश्च ॥ पश्चिमाचे ॥

कपोतकम् । न । सौवीराञ्जने ॥

कपोतचरणा । स्त्री । नलीनामगन्धवस्तुनि ॥

कपोतपालिका । स्त्री । स्तम्भाग्रप्रसारिते दारुविशेषे ॥ सौधादिप्रान्तकाष्ठा

द्दिरचिते पक्षिस्थाने । विटङ्के ॥ पालयति । पालकस्थले । क्वुन । कपोतानां पालिका ॥ कपोतान् पालयति वा । कर्मण्यण् । संज्ञायां कन् इति कन ॥

कपोतपाली । स्त्री । विटङ्के ॥ कपोतान् पालयति । कर्मण्यण् । ङीप् ॥

कपोतवङ्का । स्त्री । ब्राह्मीवृक्षे ॥

कपोतवर्णी । स्त्री । सूक्ष्मैलायाम् ॥

कपोतवाणा । स्त्री । नलीनामगन्धद्रव्ये ॥

कपोतसारम् । न । स्रोतोऽञ्जने ॥

कपोताङ्घ्रिः । पु । कपोतपादे ॥ स्त्री । नख्याम् । गन्धद्रव्यविशेषे ॥ कपोताङ्घ्रिरिव ॥

कपोताभः । पुं । कपोतवर्णे ॥

कपोतारिः । पु । श्येनपक्षिणि ॥ कपोतानाम् अरिः ॥

कपोलः । पुं । गल्ले । गण्डे । चक्षुर्गोतिर्यक्सन्धिभागे । गाल इतिभाषा ॥ कम्पते । कपिचलने । कपिगडिगण्डौ च्योलच् । कपोतिनिर्देशात् नलोपः ॥ कं सुखं पोलति वा । पुल महत्त्वे । कर्मण्यण् ॥

कप्याख्यः । पुं । सिल्हके ॥

कप्यासः । पुं । वानरगुदे । कपिपृष्ठान्ते ॥

कफः । पुं । शरीरस्थधातुविशेषे । श्लेष्मणि । सौम्यधातौ ॥ कफस्य कोप कुसुमागमे भवति । अस्य प्रकोपहेतुः । गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधिदिननिद्रापूपसर्पिःप्रपूरैः । तुहिनपतनकाले श्लेष्मणः सम्प्रकोपः प्रभवति दिवसादौ भुक्तमात्रवसन्ते ॥ अपि च । गुरुपटुमधुराम्लस्निग्धमापैः स्तैन्यद्रवदधिदिननिद्राशीतनिश्चेष्टताभिः । प्रथमदिवसभागे रात्रिभागे पित्राद्यं भवति हि कफकोपो भुक्तमात्रे वसन्ते इति ॥ त्रिधाविभक्तस्य दिवसस्य प्रथमे भागे एवं रात्रेश्चाद्ये भागे ॥ फाल्गुनचैत्रमासे च जन्तुपीडाकरोमतः । सर्वशास्त्रविचारकैः श्लेष्मा राजप्रकीर्तितः ॥ केन जलेन फलति । फलनिष्पत्तौ । अन्येष्वपि दृश्यते इति डः ॥ यद्वा । केशिरसि कफन्ति वा पूर्ववत् डः ॥

कफकूर्चिका । स्त्री । लालायाम् । स्पृक्कायाम् । आख्यासवे । लाल थुक इत्यादि भाषा ॥

कफघ्नी । स्त्री । क्षुपाप्रभेदे ॥

कफणिः । पुं । स्त्री । कफोणौ ॥ केन सुखेन फणति स्फुरति वा । फण गतौ स्फुरणचलने वा । इन् । पृषोदरादि ॥

कफणी । स्त्री । कफोणौ ॥ कूर्परिका

दिति पञ्चेऽङीष ॥

कफप्रकृतिक । त्रि । कफस्वभावे ॥ त ल्लक्षणं यथा। गम्भीरबुद्धिः स्थूलाङ्ग स्निग्धकेशो महाबलः । स्वप्नेजलाश्र यालोकी श्लेष्मप्रकृतिकोनर इति ॥

कफवर्द्धन. । पु । पिण्डीतगरवृक्षे ॥ त्रि । श्लेष्मवृद्धिकारके ॥

कफविरोधि । न । मरिचे ॥

कफात । पु । कफनाशके ॥ कफमत्ति । अद्० । क्विप् ॥

कफान्तक । पु । वर्बुरवृक्षे ॥ इतिराज निर्घण्ट ॥

कफारि । पुं । शुण्ठ्याम् ॥

कफी । पु । गजे । हस्तिनि ॥ त्रि । श्ले ष्मले । श्लेष्मणे । श्लेष्मयुक्ते ॥ कफो ऽस्यास्ति । इन्द्रोपतापेतीनि ॥

कफेलू. । पु । श्लेष्मातके ॥ कफंलाति । लाआदाने । कन्दूहन्भूअम्बूकफेलू कर्कन्धूदिधिषूरिति कूप्रत्ययो नि पातनादेत्वम् ॥

कफोणि । पु । कूर्परे । भुजमध्यग्रन्थौ । कोहणी इति भाषा ॥ कंसुखं स्फो रयति । स्फुरस्फुरणे सञ्चलनेच । प्रयुक्तः । अचद: ॥ वृ० । यद्वा । केन सुखेन फणति स्फुरतिवो । फण० । स्फुर० । इन् । वृ० ॥

कफोणी । स्त्री । कूर्परे ॥

कफोतक्लेश. । पु । कफस्य वमनायोप स्थितौ ॥

कबन्ध' । पु । उदरे ॥ धूमकेतौ ॥ रा हौ ॥ रक्षोविशेषे ॥ न । जले । उ दके ॥ पुं । न । क्रियायुक्तशिरश्शू- न्यकलेवरे ॥ कवन्धोऽस्त्रीक्रियायुक्त मपमूर्द्धकलेवरम् ॥ यथा । मनुष्या णा सवरोषुघतेषु हतमूर्द्धसु । त दावेशात्कबन्ध स्यादेकोऽमूर्द्धाक्रि यान्वित.॥अपिच । नागानामयुतं तु रङ्गनियुतं सार्द्धरथानाशत पत्तीनां दशकोटयोनिपतिता एक कवन्धो रणे । तादृक्कोटिकवन्धनर्त्तनविधौ खेलप्रलतखेशिरस्तेषाङ्कोटिनिपात नेरघुपते कोदण्डघण्टारव' । इति प्राचीना ॥ कसुखं बध्नाति । बन्धब न्धने । कर्मण्यण ॥ कंवध्यतेछिद्यतेऽस्मात् । घञ् ॥ केनवायुना वध्यतेवा । कोवायुरेवबन्ध आश्रयोयस्यवा ॥

कबन्धी । पु । ऋषिविशेषे ॥

कमित्थ । पु । कपित्थवृक्षे ॥ कपयः ति ष्ठन्त्यत्र ष्ठा० । सुपिस्थ इतिक' । पृ० ॥

कबिल' । पुं । कपिलवर्णे ॥ त्रि । कपि लवर्णेयुक्ते ॥

कभम् । न । रोहिणीनक्षत्रे ॥

कम् । अ । पादपूरणे ॥ जले ॥ मस्त के ॥ सुखे ॥ मङ्गले ॥ निन्दायाम् ॥

कम्यते । कमु० । णिङभावे णिच ॥

कमठः । पु । कच्छपे ॥ दैत्यविशेषे ॥ मुनिभाजने ॥ शल्लक्याम् ॥ भगवतोऽवतारविशेषे ॥ न । मुमानोज्ज्वपात्रविशेषे । यक्तो वलर्का लोट इति भाषाप्रसिद्धे ॥ काम्यते । कमु० । कमेरठ ॥ के जलेमठति वा । मठ मदनिवासयोः । पचाद्यच् ॥

कमठी । स्त्री । कच्छप्याम् । दृत्याम् ॥ स्वल्पकूर्मजातौ ॥ शल्लक्याम् ॥ पुंयोगादिति जातेरिति वा ङीष् ॥

कमण्डलुः । पुं । न । करके । कुण्ड्याम् । सन्यासिनां जलकाष्ठादिमयेपात्रे ॥ अलाबु दारुपात्रञ्च मृण्मयं वैदलं तथा । एतानि यतिपात्राणि मनुः स्वायम्भुवोऽब्रवीत् ॥ पुं । प्लक्षपादपे ॥ मनुष्यजातिविशेषे ॥ कस्य प्रजापतेर्जलस्य वा मण्डः सारः । तं लाति । ला० । मितद्र्वादित्वात् डुः ॥ यद्वा । मण्डनम् । मडि भूषायाम् ॥ । घञ् । कस्य मण्डं भूषां लाति । डुः ॥

कमनः । पुं । कामे ॥ अशोकवृक्षे ॥ ब्रह्मणि ॥ त्रि । कामुके ॥ कामयते कमु० । कर्त्तरि ल्युट् ॥ अभिरूपे । कमनीये । मनोहरे ॥ अनुदात्तेतश्चेति युच् ॥

कमनच्छदः । पु । कङ्कपक्षिणि ॥

कमनी । स्त्री । कामयित्र्याम् । ङीप् ॥

कमनीय । त्रि । कामनायोग्ये । वल्गुनि । मनोहरे । रुचिरे । कान्ते । शोभने ॥ कमेरनीयर् ॥

कमरः । त्रि । काममोहिते । कामिनि ॥ कामयते । कमु० । अर्त्तिकमिभ्रमीत्यरश्चित् ॥

कमलः । पु । मृगविशेषे । सारसे ॥ न । जले । ताम्रे ॥ क्लोमनि ॥ भेषजे ॥ सारसपक्षिणि । जलजे । पद्मे ॥ अस्यगुणाः । कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित् । तृष्णादाहास्रविस्फोटविषवीसर्पनाशनम् ॥ विशेषतः सितं पद्मं पुण्डरीकमिति स्मृतम् । रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् ॥ धवलं कमलं शीतं मधुरं कफपित्तजित् । तस्मादल्पगुणं किञ्चिदन्यद्रक्तोत्पलादिकमिति ॥ षण्मात्रस्य सप्तम ऽऽ । प्रभेदे ॥ कामयते काम्यते वा । कमु० । णिङभावे वृषा० कलच् ॥ कम् जलम् अलति । अल भूषणादौ । मू० कोवा ॥ ध्रुवकप्रभेदे ॥ यथा । उक्तो मध्यताले न लघुमध्ये स्फुरेद्गुरु । सप्तदशाक्षरैर्युक्तः कमलोऽयं भयानके इति ॥

कमलखण्डम् । न । कमलानां समूहे । कमलादिभ्यः खण्डः ॥

कमलच्छद । पु । पद्मदले । पद्मपत्रे ॥

कमलज । पुं । अजयोनौ । धातरि ॥ कमले जात. । जनी । ड ॥

कमला । स्त्री । लक्ष्म्याम् । श्रियि ॥ कमलमालयस्यास्या देव्याम् ॥ वरस्त्रियाम् ॥ कालकट्टादिपत्तने कमलानींबू इति ख्याते फलविशेषे ॥ यथा । रम्भाफलं तिन्तिडीक कमलानागरङ्गकम् । कलान्येतानि भोज्यानि पथ्योऽन्यानि विवर्जयेदिति तन्त्रसारे पुरश्चरणप्रकरणम् ॥ काम्यते । कम्° । वृषा° कलच् ॥ कमलम् अस्ति अस्याः । अर्श आद्यच् वा ॥ छन्दोविशेषे । यथा । द्विगुणनगणसहितः सगण इह हि विहित. । फणिपतिमतिविमला क्षितिप्रभवति कमलेति ॥ सवैयान्तर्गता कमला यथा । वसुभि.प्रमिता. सगणा विहिता पुनरेकमितो भिहितो गुरुरन्ते । यदि सत्कवयो विलसन्मतयोऽभिधयाकमलेतितदा कलयन्ते । विदधत्यनघा रमणीयतया रसनापरिखेलितयाकुतुकन्ते । यशवन्तनरेशविशोभियशोधिकशोभितसाविदधातुमुदन्ते इति ॥

कमलालय । पु । सिद्धस्थानविशेषे ॥ यथा । कमलालये महास्थाने कमलाख्यो महेश्वर । कमला नम स्वेशानी सकलार्थप्रदायिनीत्यागमोक्ति ॥

कमलालया । स्त्री । लक्ष्म्याम् ॥ कमलमालयोयस्या ॥

कमलासन । पु । धातरि ॥ कमलमासनमस्य ॥ न । आसनविशेषे ॥

कमलासनस्थ । पु । पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थे भगवन्नाभिकमलासनस्थे विधातरि ॥

कमलिनी । स्त्री । पद्मिन्याम् ॥ पद्मखण्डे । पद्माकरे ॥ कमलानि सन्त्यत्र । पुष्करादिभ्योदेशे इति इनिः ॥

कमलोत्तरम् । न । कुसुम्भपुष्पे ॥ कमलादुत्तरम् ॥

कमा । स्त्री । शोभायाम् ॥ इतिशब्दनिर्घण्ट' ॥

कमिता । त्रि । कामुके ॥ कमेर्णिङभावे तृच् ॥

कम्प. । पु । गात्रादिचलने । वेपथौ । वेपने ॥ कम्पनम् । कपिकिञ्चिच्चलने । भावे घञ् ॥

कम्पन । पु । शिशिरत्तौ ॥

कम्पनम् । त्रि । कम्रे । लोले । चञ्चले ॥ न । कम्पे ॥ कम्पनशील. । कपि° चलनशब्दार्थादितियुच् ॥

कम्पलक्ष्मा । पु वायौ ॥

कम्पाक । पु । वायौ ॥

कम्पितम् । न । कम्पने । वेपने । कम्पे

॥ त्रि । कम्पयुक्ते ॥ कम्प्यतेस्म । क
पि० । क्त ॥

कम्पिल्ल । पु । काम्पिल्लके । रक्ताङ्गे । कँवीला कामल इतिच भाषा प्रसिद्धे द्रव्ये ॥ देशविशेषे ॥

कम्पिल्लक । पुं । कम्पिल्ले ॥

कम्प्र । त्रि । कम्पयुक्ते । अतिचञ्चले ॥ कम्पनशीले । नमिकम्पीतिर' ॥

कम्बर । पु । चित्रवर्णे । कर्बुरवर्णे ॥ त्रि । चित्रवर्णवति ॥

कम्बलः । पुं । नागराजे ॥ सास्नायाम् ॥ प्रावारे ॥ कृमौ ॥ वैकक्ष्ये ॥ स्वनामख्यातेमेषादिलोमरचिते वस्त्रासनादौ । रल्लके ॥ मृगविशेषे ॥ न । जले । सलिले ॥ कम्यते । कमु० । कमेर्बुक्चेतिकलः ॥ कंकुत्सित शिरोऽम्बु वा बलते । बलसंवरणे सम्वरणेच । अच् ॥ कम्बति कम्ब्यते वा । कम्बगतौ । वृषादित्वात् कलच् ॥

कम्बली । पुं । वृषे ॥ त्रि । कम्बलवति ॥ कम्बलोऽस्त्यस्य । इनि. ॥

कम्बलिवाह्यकम् । न । गन्त्र्याम् ॥ वृषवाह्ये शकटे ॥ कम्बलः सास्ना । सा ऽस्त्येषाम् । इनिः । कम्बलिभिर्वृषै वह्यते । वह० ण्यत् । स्वार्थेकम् ॥

कम्बलीया । स्त्री । ऊर्णायाम् ॥ कम्ब लायहिता । असम्बाम्बाश्वयत । त स्मैहितमिति छ' ॥

कम्बल्यम् । न । ऊर्णापलशते ॥ कम्ब लाश्चसञ्ज्ञायामिति प्राक्क्रीतीयेष्व र्थेषुयत ॥

कम्बिः । स्त्री । दर्व्याम् ॥ वंशांशे ॥ कम्यते । कमु० । बाहु लकात् बिन ॥

कम्बुः । पु । न । शङ्खे ॥ पु । शम्बूके ॥ वलये ॥ हस्तिनि । गजे ॥ कर्बुरे ॥ ग्रीवायाम् ॥ नलके । पोला इति भाषा ॥ काम्यते । कमु० । कम्ब्वादय श्चेतिनिपातित' ॥ कम्बति । कम्ब गतौ । मृगय्वादित्वात् ॥

कम्बुकः । पु । कम्बुशब्दार्थे ॥

कम्बुकण्ठी । स्त्री । कम्बुग्रीवायाम् ॥

कम्बुकाष्ठा । स्त्री । अश्वगन्धायाम् ॥

कम्बुग्रीवा । स्त्री । शङ्खाकृतिचिरेखाश्च ग्रीवायाम् ॥ कम्बु शङ्ख इवग्री वातिस्रो रेखा यस्याः ॥

कम्बुपुष्पी । स्त्री । शङ्खपुष्प्याम् ॥

कम्बुमालिनी । स्त्री । शङ्खपुष्प्याम् ॥

कम्बूः । पुं । वलये ॥ शङ्खे ॥ त्रि । प रद्रव्यापहारिणि ॥ कम्बूर्जम्बूजम्बू कम्बूरित्युज्ज्वलदत्तोक्तपाठात् साधुः ॥

कम्बोजः । पु । हस्तिविशेषे ॥ शङ्खवि शेषे ॥ देशविशेषे ॥ तद्देश्या । यवन

दृष्टमुमारभ्यन्त्ते च्छाहृचिन्नपूर्वत'। कम्भोजदेशो देवेभि वाजिराशिपरा यथः ॥ इतितन्त्रशास्त्रम् ॥

कम्भातायी। पु। शङ्खचिल्ले ॥

कम्भारी। स्त्री। गम्भार्य्याम् ॥ कं जलं बिभर्त्ति। डुभृञ्०। कर्मण्यण्। ङीप् ॥

कम्भु। न। उशीरे ॥ इतिराजनिर्घण्ट' ॥

कम्रः। त्रि। कामुके। मैथुनेच्छाविशिष्टे ॥ कमनीये ॥ कामयते। कमु०। नमिकम्पीतिरः ॥

करः। पुं। वर्षोपले ॥ रश्मौ ॥ पाणौ ॥ प्रत्याये। भागधेये। कर्षकादिद्वारा प्रत्येकस्थावरजङ्गमादादेयेराजग्राह्यभागे ॥ शुण्डायाम् ॥ हस्तनक्षत्रे ॥ अनुक्तलेशपगुरो ॥ संज्ञायाम् ॥ कीर्य्यते। कृविक्षेपे। ऋदोरप् ॥ करोति वा। अच् ॥ कर्मोपपदेसति कर्तृवाचकोयंशब्द. । यथा। आनन्दकर' ॥

करक. । पु। करकवृक्षे ॥ पक्षिविशेषे ॥ दाडिमवृक्षे ॥ करे ॥ लङ्कायाम् ॥ पलाशवृक्षे ॥ कोविदारवृक्षे ॥ बकुलवृक्षे ॥ करीरवृक्षे ॥ नारिकेलास्थनि। माला इतिगौड भाषा। नरेलो कपाली इतिचभाषा ॥ पुं। न। करङ्के ॥ कमण्डलौ ॥ पुं। स्त्री। वर्षोपले ॥ कृणोति। कृञ् हिंसायाम्। करोति दोषाभावं वा। कृ आदिभ्यः संज्ञायांवुन् ॥

करकङ्कणन्याय। पु। कङ्कणशब्देनैव करभूषणविशेषबोधसम्भवेऽपि करशब्दपूर्वक कङ्कणशब्द. करसम्बद्ध कङ्कणबोधार्थक इत्यर्थपरे दृष्टान्ते॥

करकच। पु। योगविशेषे ॥ यथा। शनिभार्गवजीवज्ञकुजसोमार्कवासरे। षष्ठ्यादितिथय सप्तक्रमात् करकचा स्मृता इति ॥

करकच्छपिका। स्त्री। कूर्ममुद्रायाम् ॥

करकण्टक. । पुं। नखे ॥

करका। स्त्री। वर्षोपले। मेघोपले। ओलाइतिभाषा ॥ कृणोतेर्वुन्नन्ता टापि क्षिपकादित्वात् प्रत्ययस्थादितीत्त्वंन ॥

करकाजलम्। न। दिव्यपानीयभेदे ॥ दिव्यवाय्वग्निसंयोगात्संहता' खात्पतन्तियाः। पाषाणखण्डवत्तापस्ता कारकोऽमृतोपमा ॥ करकाजजलरूक्षंविशदंगुरुचस्थिरम्। दारुणं शीतलंसान्द्रंपित्तहृत कफवायुकृत् ॥

करकाम्भ. । पु। नारिकेलवृक्षे ॥

करग्रह. । पु। विवाहे ॥ करग्रहणे ॥

करञ्जी । स्त्री । उदकीर्य्यें । महाकरञ्जे ॥ करञ्जी स्तम्भिनी तिक्ता तुवरा कटुपाकिनी । वीर्य्योष्णा वमिवातार्शःकृमिकुष्ठप्रमेहजित ॥

करट. । पुं । गजगण्डे ॥ कुसुम्भवृक्षे ॥ निन्द्यजीवने ॥ एकादशाहादिश्राद्धे ॥ दुर्दुरूटे ॥ वायसे ॥ वाद्यविशेषे ॥ करोति शकुनम् । शकादिभ्योऽटन्॥ केति रटतिवा । रटशब्दे । पचाद्यच् ॥

करटकः । पुं । करटार्थे ॥ स्वार्थेकन् ॥

करटा । स्त्री । दुःखदोह्यायाङ्गवि ॥ अजायतष्टाविति मदन्त वचयाष्टाप् ॥

करटी । पुं । हस्तिनि ॥

करटिनी । स्त्री । हस्तिन्याम् ॥

करटुः । पु । कर्करेटौ । करकटियाइतिगौडभाषाप्रसिद्धपक्षिवि० ॥

करणम् । न । हेतौ । साधकतमे । क्रियासिद्धौ प्रकृष्टोपकारके ॥ यद्व्यापारानन्तर मव्यवधानेन फलोत्पत्तिस्तस्मिन्नित्यर्थे । तेनदात्रेण धान्यं लुनातीत्यत्रहस्तादे करणत्वेपि दात्रस्यैव करणत्वम् । तथाचोक्तम् । कारणाव्यवधानेपि क्रियानिष्पत्तिकारणम् । यद्विवक्षितं तेषु करणत्व प्रकीर्त्तितमिति ॥ साधने ॥ कर्म्मणि ॥ तिथ्यर्द्धपरिमितेषु ववाद्येकादशसु ॥ यथा । ववाख्यवालवकौलवतैतिलगरवणिजविष्टयःसप्त । शकुनिचतुष्पदनागकिंस्तुघ्नानि भवन्ति करणानि ॥ सितादे.करणंबवेकोयातितिथ्यर्द्धसम्बय. । सप्तभक्तोवशेषेणमितस्याद्ववतोगतम्॥ चराणि विष्टिं करणान्यृते चसा भवन्ति सौम्याखिलकर्म्मसिद्धये । तथैवधीराश्चिपितृकर्म्मणे विष्टिर्विघातादिविधौवराभवेदिति ॥ हस्तलेपे॥ नृत्यप्रभेदे ॥ नृत्यविषयकाष्टोत्तरशतकरणविशेषेषु ॥ यथा । करणानान्तुसर्वेषां सामान्य लक्षणन्त्विदम् । प्रायोवामकरोवक्ष स्थितोन्य पुरतोनुगः ॥ पादाभ्यांकरणंस्येय तदिहाष्टोत्तरंशतम् । निकुञ्चितंपार्श्वक्रान्तमतिक्रान्तंविवर्त्तकम् ॥ विद्युद्भ्रान्तंगजक्रीडंक्रान्तञ्चगरुडप्लुतमित्यादिसङ्गीतदामोदर ॥ गीतप्रभेदे ॥ क्रियाप्रभेदे ॥ व्रतबन्धे ॥ कायस्थसंहतौ ॥ कृतादौ ॥ क्षेत्रे ॥ गात्रे । काये ॥ संवेशने ॥ कायस्थे ॥ इन्द्रिये ॥ वर्णानांस्पष्टतादौ ॥ योगिनामासनादौ ॥ न्याय

मते व्यापारवदसाधारणकारणङ्करणम्। समवाय्यसमवायिनिमित्तकारणमध्ये यदसाधारणकारणं तदेव करणमिति॥ सांख्यमते इन्द्रियेषु॥ यथा। करणं त्रयोदशविधम्। इन्द्रियाण्येकादश बुद्धिरहङ्कारश्चेति त्रयोदशप्रकारं करणम्। त्रयोदशविधे करणेऽवान्तरविभागं करोति। अन्तःकरणं त्रिविधं दशधा बाह्यं त्रयस्य विषयाख्यम्। साम्प्रतकालं बाह्यं त्रिकालमाभ्यन्तरं करणम्॥ ३३॥ अस्यार्थः। अन्तःकरणं त्रिविधम्। बुद्धिरहङ्कारो मन इति। शरीराभ्यन्तरवर्त्तित्वादन्तःकरणम्॥ दशधा बाह्यमिन्द्रियम्, त्रयस्यान्तःकरणस्य विषयाख्यम्। विषयमाख्यातीति विषयाख्यम्। सङ्कल्पाभिमानाध्यवसायेषु कर्त्तव्येषु द्वारीभवति। तत्र बुद्धीन्द्रियाण्यालोचनेन कर्मेन्द्रियाणि यथास्वं व्यापारेण। बाह्याभ्यन्तरयोः करणयोर्विशेषमाह। साम्प्रतकालमित्यादि। साम्प्रतकालं वर्त्तमानकालं बाह्येन्द्रियम्। वर्त्तमानसमीपमनागतमपि वर्त्तमानम्। अतीतानागतवर्त्तमानविषया भवति। त्रिकालमाभ्यन्तरं करणम्। तद्यथा। पूरभेदादभूद्वृष्टिः अस्ति धूमादग्निरिह नगनिकुञ्जे असत्युपघाते पिपीलिकाण्डसञ्चरणादिह भविता वृष्टिरिति तदनुरूपाः सङ्कल्पाभिमानाध्यवसाया भवन्तीति॥ श्रोत्रादिपञ्चज्ञानेन्द्रियाणि वागादिपञ्चकर्म्मेन्द्रियाणि मनो बुद्धिश्चेति द्वादशसंख्याके॥ करणवर्गे मनोबुद्धिश्चेतिदर्शितविशेषौ वृत्तिमांस्त्वहङ्कारः कर्त्तैव। चिदाभासस्तु सर्व्वेषामविशिष्टः। अनात्मा भौतिकः करणतश्च॥ इतिकर्त्तव्यताके साधने॥ धात्वर्थे॥ पुं। वैश्याच्छूद्रायां जाते। अयं लिखनवृत्तिः कायस्थ इति ख्यातः। इति भरतः॥ धनधान्याध्यक्षता च राजसेवा तथैव च। शिल्पे. परिचर्याच दुर्गान्तः पुररक्षणम्॥ एषा पारशवस्योक्ताऽप्रशस्ता करणस्य च। प्रोक्ताऽप्रशस्ता वृत्तिरुभयत्रसुखप्रदा॥ व्रात्यात् क्षत्रियात् सवर्णायामुत्पन्ने झल्लमल्लादिसंज्ञके॥ यथा। झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च। नटश्च करणश्चैव खसो द्रविड एव चेति मनौ १० अध्याय.॥ वामरादौ॥ किरति कीर्य्यते ऽनेन वा। कृ°। बहुलमन्यत्रापीति युच्। कच्छपुटो बहुकमिति व्युत्पा॥ कारणकार्य्यम्। न। इन्द्रियाणाङ्कार्य्ये॥ आ

हरणादिक्रियाणां सकर्मकत्वात् किं कर्म कतिविधञ्चेत्यत आह ॥ कार्य्यञ्चतस्य दशधा हार्य्यन्धार्य्यं प्रकाश्यञ्च । तस्य त्रयोदशविधस्य करणस्य दशधा कार्य्यम् । आहार्य्यम् धार्य्यम् प्रकाश्यञ्च । आहार्य्यं व्याप्यम् कर्मेन्द्रियाणां वचनादानविहरणोत्सर्गानन्दा ज्ञानेन्द्रियाणा शब्दस्पर्शरूपरसगन्धमया यथास्वं व्याप्याः । ते च दिव्यादिव्यतया दशधा । एवंधार्य्यमपि अन्तःकरणत्रयस्य प्राणादिलक्षणया वृत्त्या शरीरम् तच्च पार्थिवादि पाञ्चभौतिकम् शब्दादीना ञ्चपञ्चाना समूहः पृथिवीति । तेच दिव्यादिव्यतया दशधेति धार्य्यमपि दशधा । एवं बुद्धीन्द्रियाणां प्रकाश्य दशधेति शब्दादीनांपञ्चानां दिव्यादिव्यभेदात् । करणानाञ्च कार्य्यम् ॥

**करणत्राणम्** । न । मस्तके ॥

**करणव्यापारः** । पु । करणानां व्यापारे ॥ कारकविशेषः करणम् । नच व्यापारावेशंविना कारकत्वमिति व्यापारमाह । तदाहरणधारण प्रकाशकरम् । तत्रकर्मेन्द्रियाणि वागादीनि आहरन्ति स्वस्वविषय यथा स्वमुपाददते स्वव्यापारेण व्याप्नुवन्तीतियावत् । बुद्ध्यहङ्कारमनांसितु स्ववृत्त्या प्राणादि लक्षणया धारयन्ति । बुद्धीन्द्रियाणितु प्रकाशयन्ति ॥

**करणाधिप** । पु । जीवे । हृषीकेशे ॥ श्रोत्रादिचतुर्दशेन्द्रियाणामधिपा यथा । श्रोत्रस्य दिक् । त्वचोवात । चक्षुष सूर्य्य । रसनाया प्रचेता । घ्राणस्याश्विनौ ॥ वाचो वह्नि । हस्तस्य इन्द्र । पादस्य विष्णु । पायोर्मित्र । उपस्थस्य प्रजापति ॥ मनसश्चन्द्रः । बुद्धेश्चतुर्मुखः । अहङ्कारस्य शङ्करः । चित्तस्याच्युत इति ॥

**करणाधिपाधिपः** । पु । जीवस्येश्वरे ॥ करणाधिपस्य अधिप ॥

**करणी** । स्त्री । वैश्या च्छूद्रायामुत्पन्नायाम् ॥ ल्युडन्तात् ङीप् ॥

**करणीय** । त्रि । कर्त्तव्ये । कार्य्ये ॥ कृञोऽनीयर् ॥

**करण्डः** । पु । मधुकोषे ॥ असौ । खड्गे ॥ कारण्डवे खगे ॥ दलाढके ॥ वंशादिरचिते भाण्डविशेषे । कँरंडी करण्डी इतिचभाषा प्रसिद्धे पुष्पादिधारणार्थे भाण्डे ॥ समुद्गे । सम्पुटे ॥ करोति । डुकृञ्० । अण्डन्कृसृभृवृभ्यश्चण्डन् ॥

**करण्डा** । स्त्री । कालखण्डे । यकृति ॥

प्रभेय' ॥

करभः । पु । मणिबन्धादाकनिष्ठं करस्य बहिर्भागे ॥ करिशावके ॥ उष्ट्रपुत्रे । बोतादृतिभाषा ॥ उष्ट्रे ॥ नखनाम गन्धद्रव्ये ॥ कृणाति किरत्यनेन की र्यंतेवा । कृविक्षेपे कृञ्हिंसायांवा । कृशृशलिकलिगर्दिभ्योऽभच् ॥ करे भातिवा । भादीसौ । मुतिकः ॥

करभकाण्डिका । स्त्री । उष्ट्रकाण्डीवृक्षे ॥

करभञ्जिका । स्त्री । उदकीर्ये । करञ्ज्याम् ॥

करभप्रिया । स्त्री । क्षुद्रदुरालभायाम् ॥

करभवल्लभ. । पुं । कपित्थवृक्षे ॥ पीलुवृक्षे ॥

करभादनी । स्त्री । क्षुद्रदुरालभायाम् ॥

करभी । पुं । हस्तिनि ॥

करभी । स्त्री । उष्ट्रयोषायाम् । माम्याम् ॥

करभीर. । पु । सिंहे ॥ इतिशब्दरत्नावली ॥

करभूषणम् । न । कङ्कणे ॥ करंभूषयति । करो भूष्यतेऽनेनवा । भूषअलङ्कारे । ल्युट् ॥ हस्ताभरणमात्रे ॥

करभोरू. । स्त्री । उत्तमस्त्रीविशेषणे ॥ करभइव ऊरूयस्याःसा । ऊरूत्तरपदादौपम्येऊङ् ॥

करमट्ट. । पुं । गुवाकवृक्षे । तन्मुखारे ॥

करमरी । पुं । बंदुग्राहइतिप्रसिद्धे । वन्दिनि ॥ इतित्रिकाण्डशेषः ॥

करमर्द. । पु । करमर्दके । करौंदाइतिभाषा ॥ करंमृद्नाति । मृद्क्षोदे । कर्मण्यण् ॥ मधुरोऽम्लश्चाम्लरुस्तु करमर्दद्वयं मतम् । करमर्दद्वयं त्वाम मम्लंगुर्वतृषापहम् ॥ उष्णं रुचिकरं प्रोक्तं पित्तरक्तकफप्रदम् । तत्पक्वं मधुरं रुच्यं लघु पित्तसमीरजित् ॥

करमर्दक. । पु । कृष्णपाकफले । करौंदाइतिभाषा । सुषेणे । अविग्ने ॥ करमर्दएव । स्वार्थेकन् ॥

करमर्दिका । स्त्री । वनकरमर्दके ॥ करमर्दोल्लघुफला सा ज्ञेया करमर्दिका ॥

करमर्दी । पुं । करञ्जवृक्षे ॥

करमर्दी । स्त्री । करमर्दकवृक्षे ॥

करमाल. । पुं । खतमाले । धूमे ॥ इतिहेमचन्द्र. ॥

करमाला । स्त्री । करपर्वरूपमालायाम् ॥

करमुक्तम् । न । बरछीभालाइतिभाषाप्रसिद्धे अस्त्रविशेषे ॥

करम्ब । त्रि । आमिश्रे । मिश्रिते ॥ करोति । डुकृञ्० । कृकादिकदम्बश्च ॥

करम्बित । त्रि । सम्पृक्ते । मिश्रिते ॥

करम्भ । पु । दधिमिश्रितसक्तुषु ॥ के न जलेन रभ्यते मिश्रीक्रियते । केन वायुना वा रभ्यते । रभिरनेकार्थः । अकर्त्तरिचेति घञ् । रभेरश बलिटोरितिनुम् ॥

करम्भकम् । न । कर्कसारे । करम्भे ॥

करम्भा । स्त्री । प्रियङ्गौ ॥ शतावर्य्याम् ॥

करम्ब । पु । नखे ॥ करेरटतीति । ख श्वेरिगुपधेति कः ॥

करर्द्धि । स्त्री । करताल्याम् ॥ करस म्पर्द्धि ॥ करस्य ऋद्धि ।

करवाल । पुं । कृपाणे ॥ करंवलति । करेण वलति वा । वलप्राणने । कर्मण्यण् । ज्वलादिभ्योणो वा । यद्वा । वलसंवारः । वलनेष्टने । घञ् । करोवालोस्य करेण वल्यते वा । कर्मणि घञ् ॥

करवालिका । स्त्री । ईल्याम् । करपालिकायाम् ॥ करंवलते । वलहिंसादानयोः । अच् । करेण वाल्यते वा । विजन्तादच् । कन् ॥

करवी । स्त्री । हिङ्गुपत्रे ॥

करवीर । पुं । कृपाणे । खड्गे ॥ दैत्य विशेषे ॥ ब्रह्मावर्त्ते दृषद्वतीनदीतीरे चन्द्रशेखरराजपुरे ॥ श्मशाने ॥ विषप्रभेदे । करवीरमूले ॥ कनेर इतिप्रसिद्धे वृक्षे । प्रतिहासे । अश्वमारके ॥ करवीरद्वयतिक्तं कषायं कटुकञ्च तत् । व्रणलाघवकृन्नेत्रकोपकुष्ठव्रणापहम् ॥ वीर्योष्णं कृमिकण्डूघ्नं भक्षितं विषवन्मतम् ॥ रक्तश्वेतप्रभेदेन करवीरद्वयं मतम् ॥ करं वीरयति । वीरविक्रान्तौ । कर्मण्यण् ॥ न । अश्वपुष्पे ॥ करवीरस्य विकारो वा पुष्पम् । पुष्पमूलेषु बहुलमित्यणो लुक् ॥

करवीरक । पु । अर्जुनवृक्षे ॥ करवीरार्थे ॥

करवीरकन्दसंज्ञ । पुं । तैलकन्दे ॥

करवीरभूषा । स्त्री । आढक्याम् । अरहड इतिभाषा ॥

करवीरी । स्त्री । अदितौ । देवमातरि ॥ सद्गव्याम् । श्रेष्ठगव्याम् ॥ पुत्रवत्याम् ॥

करशाखा । स्त्री । अङ्गुलौ ॥ करस्यशाखेव ।

करशीकर । पुं । वमथौ । करिशुण्डनिर्गतजलकणे ॥ करस्यशीकरः ॥

करशूक । पुं । नखे ॥ इतित्रिकाण्डशेष ॥

करसूत्रम् । न । विवाहादौ मङ्गलार्थं सूत्रादिमये कङ्कणे ॥ नागादैावधिबन्धनरूपंतद्रूपचारात् ॥

करहाट । पुं । पद्मादिमूले । शिफा कन्दे ॥ मदनद्रुमे ॥ महापिण्डीत रौ ॥ देशविशेषे ॥ करहाटयति । घटद्दोसौ । ण्यन्त । कर्मण्यण् ॥
करहाटकः । पु । मदनपादपे । मयन फल इति भाषा ॥ स्वार्थेकन् ॥ न । स्वसम्बन्धिस्वर्णे ॥
कराट. । त्रि । विकटे । भयानके ॥
करामर्द्द. । पुं । करमर्द्द ॥
काराम्बुकः । पु । अग्नि । सुषेणे ॥
काराम्लकः । पु । करमर्द्दे ॥
करायिका । स्त्री । कूटपूर्य्याम् । करां की इति गुवसल इतिच भाषा ॥
करारोटः । पुं । अङ्गुरीयके ॥
कराल. । पुं । गर्जनतैल इति गौड-भाषाप्रसिद्धे सर्जरसयुक्ततैले । भू मतैले ॥ भल्लाततैले ॥ राक्षसविशे षे ॥ दन्तरोगविशेषे । यथा । शनैः शनै प्रकुरुते वायुर्दन्तसमाश्रित. । करालान् विकृतान् दन्तान् करा-लोन स सिध्यति ॥ न । कृष्णकुठेर के । श्यामतुलसी इतिभाषा ॥ वे सवारभेदे ॥ यथा । तप्तस्त्रेहे प चेत् पूर्वं वेसवारकसंज्ञकम् । पाक प्रापितमौरर्थं कराल इदकै मत-मिति ॥ त्रि । दन्तुरे ॥ तुङ्गे । उच्चे ॥ विकृते । भीषणे ॥ करोत लाति । ला० । आतश्चोपसर्गे इति सुपी ति योगविभागाद्वा क. ॥ यद्वा । अलभूषणादौ । कर्मण्यण् ॥
करालक. । पु । करालार्थे ॥
करालत्रिपुटा । स्त्री । काश्चिकायाम् । लङ्काधान्ये ॥
कराला । स्त्री । शारिवायाम् ॥
करालास्य । त्रि । दन्तुरवदने ॥ करा ल दन्तुरमास्यं यस्य ॥
करालिक । पु । वृक्षे ॥ इति हेमचन्द्र ॥
करालित. । त्रि । भीषिते । पीडिते ॥
कराली । स्त्री । वह्नेः सप्तजिह्वान्तर्ग तजिह्वाविशेषे ॥ देवीविशेषे ॥ व ह्वादिभ्यश्चेति पाक्षिको ङीष ॥
करास्फोटः । पु । आस्फोटिते । वक्ष स्यस्य बाहोः द्वितीयहस्तेनताडने ॥
करिक । पुं । अरिमेदवृक्षे । विट्ख दिरे ॥
करिकणावल्ली । स्त्री । चविकावृक्षे ॥
करिका । स्त्री । नखव्रणे ॥ करिका न खरेखिकेति वैजयन्ती ॥
करिकुम्भः । पुं । नागकेशरचूर्णके ॥
करिगर्जितम् । न । बृंहिते । हस्तिग र्जने ॥
करिणी । स्त्री । देवताभेदे ॥ धेनुका याम् । हस्तिन्याम् ॥ इन्नन्तान्नान्त लक्षणो ङीप् ॥

करिदारकः । पु । सिंहे ॥

करी । पु । हस्तिनि ॥ करः शुण्डा अस्ति अस्य । इनि ॥ लक्ष्मीकामो युद्धादन्यत्र करिवधं न कुर्यात् इयंहि श्रीर्यत्करिणः इत्यायुष. ॥

करिनासिका । स्त्री । यन्त्रविशेषे ॥

करिपथम् । न । साक्षीशपथे ॥

करिपिप्पली । स्त्री । गजपिप्पल्याम् । चविकाफले ॥ करीषपिप्पली इत्यन्यत् ॥

करिपोत । पु । करिशावके ॥

करिबन्ध. । पु । प्रारव्धौ । गजबन्धनस्तम्भे ॥ इतिहारावली ॥

करिमाचल । पु । सिंहे ॥

करिमुखः । पुं । गणेशे । विनायके ॥ करिणोमुख मिवमुख मस्य ॥

करिरतम् । न । रतबन्धान्तरे ॥ भूगतस्तनभुजाश्रमकाक्ता मुन्नता स्वयम घोमुखीं स्त्रियम् । क्रामति स्वकरकृष्टमेहने वल्लभे करिरतंत दुच्यते ॥ करिपदमिति पाठान्तरम् ॥

करिशावकः । पु । कलभे । हस्तिशिशौ ॥ करिणः शावक ॥

करिष्ठः । त्रि । अतिशयेन कर्त्तरि ॥ अतिशायने इष्ठन् । तुरिष्ठेमेयस्सु ॥

करिस्कन्धः । पुं । करीणां समूहे ॥ नरकरितुरगाणांस्कन्धध् ॥ शब्दार्थे ॥

करीर. । पु । घटे ॥ ककरे । ग्रन्थिले । करील इतिभाषाप्रसिद्धे वृक्षे ॥ करीर कटुकस्तिक्त स्वेद्युष्णोभेदन. स्मृत । दुर्नामकफवातामगरशोथव्रणप्रणुत् ॥ पु । न । वंशाङ्कुरे ॥ कृणाति किरति कीर्यते वा । कृविक्षेपे वा । कृग्रृशृकटीति ईरन् ॥ करिणमीरयति वा । ईर० । कर्मण्यण् ॥

करीरफलम् । न । कारीरे । टींटइति ख्याते ॥

करीरा । स्त्री । हस्तिदन्तमूले ॥ चीरिकायाम् । झिल्याम् । झींगुरइतिभाषा । बनझींगर गींदराइति ख्याते कीटे ॥ अजाद्यतष्टाप् ॥

करीरिका । स्त्री । } दन्तिनान्दन्तमूले ॥
करीरी । स्त्री । } चीरिकायाम् ॥

करीषः । पुं । न । शुष्कगोमये । छगणे । छाँणा कण्डी इतिभाषा ॥ कीर्यते । कृविक्षेपे । कृतॄभ्यामीषन् ॥

करीषङ्कषा । स्त्री । वात्यायाम् ॥ करीष कषति । कषहिंसायाम् । सर्वकूलाभ्रकरीषेषुकषइतिकषेःखच् । मुमागमः ॥

करीषाग्निः । पुं । छागणे । गोमयाग्नौ ॥

करषः । पुं । करषा-करेँ इतिभाषा

सिद्धे दृचविशेषे ॥ शृङ्गाराद्यष्टरसान्तर्गततृतीये रसे ॥ इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ॥ वृक्षभेदे ॥ सर्वभूताभयदातरि परमहंसपरिव्राजके ॥ त्रि । हीने ॥ सदये । दुःखितेषु दया करुणा तद्वति ॥ अर्श आद्यच ॥ करोति मनः । डुकृञ् । कृवृदारिभ्य उनन् ॥

करुणमल्ली । स्त्री । नवमल्लिकायाम् ॥

करुणविप्रलम्भ । पु । पूर्वरागादिचतुर्भेदविप्रलम्भशृङ्गारमध्ये विप्रलम्भविशेषे ॥

करुणा । स्त्री । कृपायाम् । दयायाम् । परदुःखहानीच्छायाम् ॥ दुःखितेषु कथन्नु नामैषां दुःखनिवृत्तिः स्यादिति कृपामेव भावयेन्नोपेक्षा न वाऽमर्षम् ॥ करणम् । कृवृदारिभ्य उनन् । टाप् ॥

करुणापर । त्रि । दयालौ । रते ॥

करुणामय । त्रि । कृपाप्राचुर्यवति ॥

करुणी । स्त्री । ग्रीष्मपुष्प्याम् । रक्तपुष्प्याम् । काकरखिरुणी इति कोकण भाषा ॥

करूष । पुं । देशविशेषे ॥

करेटः । पुं । नखे ॥

करेटव्या । स्त्री । धनच्छूमपक्षिणि ॥

करेटु । पुं । स्त्री । कर्करेटौ । करकटिया इति गौडभाषाप्रसिद्धे विहगे ॥ के जले वायौ वा रेटति । रेटुभाषणे । मृ० कु ॥

करेणु । पु । इभे । मतङ्गजे । गजे ॥ कर्णिकारवृक्षे ॥ स्त्री । हस्तिन्याम् ॥ करोति । कृञ्भ्यामेणु ॥ के रेणुरस्येति वा ॥

करेणुभू । पुं । पालकाप्यमुनौ ॥

करेणुसुत पु । मुनिविशेषे ॥ इभशावके । कलभे ॥ करेणोः सुत ॥

करेन्दुक । पु । भूतृणे ॥

करेवर । पु । तुरुष्के । सिल्हके ॥

करोटः । पु । न । शिरोस्थनि ॥ कं वायुं रोटते । रुट० । अच ॥

करोटि । स्त्री । शिरोस्थि ॥ कं वायुं रोटते । रुटदीप्तौ प्रतिघाते च । केन रुध्यते वा । इन् ॥ रोटयति वा । रुटिस्फुरादिः । अच इ ॥

करोटिका । स्त्री । शिरोस्थि । कपाले ॥ करोटिरेव । स्वार्थे कन ॥

करोटी । स्त्री । करोटौ ॥ ङीष ॥

कर्क । पु । कर्कोटने ॥ वह्नौ ॥ शुक्लाश्वे ॥ दर्पणे ॥ घटे ॥ चतुर्थराशौ ॥ कर्कटवृक्षे ॥ कुलीरे ॥ करोति कृणोति क्रियते वा । कृदाधाराचिकलिभ्यः कः ॥

कर्कचिभिंटी । स्त्री । चिभिंटायाम् ।

कर्कटीभेदे ॥

कर्क्कट । पु । वृक्षविशेषे । क्षुद्रामलक सञ्ज्ञे । कर्कफले ॥ पक्षिवि० । क कर्केटौ ॥ जलजन्तुविशेषे । कुलीरे । काँकड़ा इतिभाषा ॥ मेषादिराश्यन्तर्गतचतुर्थराशौ ॥ जन्मकालीनचन्द्राश्रितैतद्राशिफलम् । श्रुतकला मलनिर्मलवृत्तय, सुकृतगन्धजला शयकेलय । किल नरास्तु कुलीरग ते विधौ वसुमत सुमतो ऽर्थिलक्ष्य ॥ कर्किलग्ने समुत्पन्नो भोगी सर्वजनप्रिय । मिष्टान्नपानभोगी च जायते स्वजनप्रिय. ॥ वालुङ्क्याम् ॥ शाल्मलीफले ॥ घटीयाकरणे ॥ कृणाति । कृहिं० । अन्येभ्योऽपीतिविच् । कटति । कटे० । पचाद्यच् । कर्चासौकटश्च । अजरादित्वान्नेफ. ॥ कर्कइति सौत्रोधातुः । शकादिभ्योटन्वा ॥ कर्कं श्वेतवर्णं टलति । टलगतौ । डो वा ॥

कर्कटक. । पुं । वृक्षविशेषे ॥ कुलीरे ॥ कर्कटएव । स्वार्थे कन् ॥

कर्कटशृङ्गिका । स्त्री । } अजशृङ्ग्याम् ।

कर्कटशृङ्गी । स्त्री । } ॥ महाघोषायाम् । कुलीरशृङ्ग्याम् । काँकड़ासीगी इतिख्यातायाम् ॥

कर्कटाख्या । स्त्री । कर्कटशृङ्ग्याम् ॥

कर्कटाधिप । पु । चन्द्रे ॥

कर्कटाह्व । पु । बिल्ववृक्षे ॥

कर्कटाह्वा । स्त्री । कर्कटशृङ्ग्याम् ॥

कर्कटि । स्त्री । वालुङ्क्याम् । इर्वारौ ॥ शाल्मलीफले ॥ करङ्कटति । कटे० । सर्वधातुभ्यइन् । शकन्ध्वादिषु पररूपं वाच्यम् ॥

कर्कटिनी । स्त्री । राजशरिण्याम् ॥

कर्कटी । स्त्री । एर्वारौ । वालुङ्क्याम् । ककड़ी इतिभाषा ॥ कर्कटी शीतला रूक्षा ग्राहिण्यी मधुरा गुरु । रुच्या पित्तहरा सामा पक्का मन्दाग्निपित्तकृत ॥ अस्या पाकप्रकारस्तु । त्वग्बीजरहिता प्रौढा गुलिकाकारखण्डिता । तक्रिता भुष्टे तस्यैकर्कटीवाप्रलेहिता ॥ विपाकस्रुवक्षंहृतचुध्रसाद्धैं विभावितंवह्नमयकेराभ्याम् । कृतैश्च मासश्चकटुभ्या सेतम् प्रतिचयरोचमसातनोति ॥ शाल्मलीफले ॥ देवदालीलतायाम् ॥ कर्कटशृङ्गीवृक्षे ॥ घोटिकावृक्षे ॥ करङ्कटति । कटे० । इन् । पक्षेङीष् । शकन्ध्वादि ॥

कर्कटु । पु । करटुपक्षिणि ॥

कर्कन्धू । पुं । स्त्री । कोलिपादपे । बदरीवृक्षे ॥ बदरीफले । बेर इतिभाषा । कर्कन्धु क्षुद्रबदरं कथितम्

पूर्वसूरिभिः । अम्लं स्यात् चुद्रवदरं कषायं मधुरं मनाक् ॥ स्निग्धं गुरु च तिक्तञ्च वातपित्तापहं स्मृतम् । शुष्कं भेदनमग्निकृत् सर्वं लघुतृष्णाक्लमास्त्र जित् ॥ इत्यन्तरे ॥ कण्टकं दधाति । डुधाञ् ० । अन्दूदृन्भूजम्बिति निपातितः कू प्रत्ययान्तः । कर्कं द धाति वा । निपातनान्मुम् ॥

कर्कारः । पु । दर्पणे । मुकुरे ॥ न । चूर्णञ्जनकचुद्रपाषाणखण्डे । चूर्णखण्डे । कङ्कर काँकर इतिचभाषा ॥ भङ्गुरे ॥ चि । कठिने । दृढे ॥ कर्कनम् । कर्कहासे । घञ् । कर्कं राति । रा० । आतोनुपेति क ॥

कर्कराङ्ग । पुं । कालकण्ठविहङ्गमे । खञ्जने ॥

कर्कराटु । पुं । कटाक्षे ॥ इतिकश्चित् जटाधरः ॥

कर्कराटुकः । पु । कर्करेटुपक्षिणि ॥

कर्करान्धुकः । पुं । अन्धकूपे ॥

कर्करालः । पु । चूर्णकुन्तले ॥

कर्करिका । स्त्री । घर्षे । नेत्रलज्जायाम् ॥

कर्करी । स्त्री । गलन्तिकायाम् । सनालजलपात्रे । झारी इति भाषा ॥ कठिनायाम् ॥ कन्दोर्ध्वतपक्वनिष्कासनसाधने । झना झारा इति च भाषा ॥ गौरादित्वान् ङीष् ॥

कर्करीका । स्त्री । गलन्तिकायाम् । कर्करीम् ॥ फर्फरीकादित्वात् साधु ॥

कर्करेटम् । न । अर्द्धचन्द्रे । अङ्गुलितोरणे । गलेहस्ताधाने ॥

कर्करेटु । पु । करेटौ । करकटिया इति गौडभाषा प्रसिद्धे खगे ॥ कर्कं तिरेटति । रेटृभाषणे । मृगय्वादि ॥

कर्कश । पुं । काम्पिल्लवृक्षे ॥ कासमर्द्दे ॥ इक्षौ ॥ खड्गे ॥ चि । साहसिके ॥ क्रूरे ॥ दृढे ॥ असहणे । खरस्पर्शे । दुस्पर्शे ॥ निर्दये ॥ कृणोति । कृञ् हिंसायाम् । अन्येभ्योपीतिविच् । कशति । कशशब्दे । पचाद्यच् । कर् चासौ कशश्च ॥ यद्वा । करेकशति । कशः पचाद्यच् । अन्तर्भावितण्यर्थो वा ॥ शकन्ध्वादिः । कर्कोन्मत्त्वर्थे लोमादित्वात् शोवा ॥

कर्कशच्छद । पुं । शाखोटवृक्षे ॥ पटोले ॥

कर्कशच्छदा । स्त्री । कोशातक्याम् । तोरखी इतिभाषा ॥ दग्धरुहायाम् ॥

कर्कशदल । पु । पटोले ॥

कर्कशदला । स्त्री । दग्धारुहे ॥

कर्कशवाक्यम् । न । निष्ठुरवचने । परुषवाचि ॥

कर्क्कशा । स्त्री । वृश्चिकाल्यौषधे ॥ मूरायाम् ॥

कर्क्कसारम् । न । करम्भे । दधिसक्तुषु ॥

कर्क्कारु । पु । कुष्माण्डे ॥ स्त्री । कुष्माण्ड्याम् ॥ कर्क्कारुर्ग्राहिणी शीता रक्तपित्तहरा गुरुः । पक्वा तिक्ताग्निजननी सक्षारा कफवातनुत् ॥ कर्क्कं शुक्लवर्णम् ऋच्छति । ऋगतौ । बाहुलकादुण् ॥

कर्क्कारुक । पु । कालिङ्गवृक्षे ॥

कर्क्कारू । स्त्री । कुष्माण्ड्याम् ॥

कर्क्किः । पुं । कर्क्कटराशौ ॥

कर्क्की । पु । कर्क्कटे ॥

कर्क्केतन । पुं । न । रत्नविशेषे ॥ अस्योत्पत्त्यादिकं गरुडपुराणे ७५ अध्याये । सूत उवाच । वायुर्नखान् दैत्यपतेर्गृहीत्वा चिक्षेप सम्यग्यवनेषु हृष्टः । ततः प्रभूतं पवनोपपन्नं कर्क्केतनं पूज्यतमं पृथिव्याम् ॥ वर्णेन तद्रुधिरसोममधुप्रकाशमाताम्रपीतदहनोज्ज्वलितं विभाति । नीलं पुनः शुक्लसितं परुषं विभिन्नं व्याध्यादिदोषकरणेन न तद्विभाति ॥ स्निग्धा विशुद्धाः समरागिणश्च आपीतवर्णा गुरवो विचित्राः । त्रासव्रणव्याधिविवर्ज्जिताश्च कर्क्केतनास्ते परमाः पवित्राः ॥ पत्रेण काञ्चनमयेन तु वेष्टयित्वा हस्ते गलेऽथ धृतमेतदति प्रकाशम् । रोगप्रणाशनकरं कलिनाशनञ्च आयुष्करं कुलकरञ्च सुखप्रदञ्च ॥ एवंविधं बहुगुणं मणिमावहन्ति कर्क्केतनं शुभमलङ्कृतये नरा ये । ते पूजिता बहुधना बहुबान्धवाश्च नित्योज्ज्वलाः प्रमुदिता अपि ते भवन्ति ॥ ये केऽपनह्यविकृताकुलनीलभासः प्रम्लानरागकलुषाः कलुषा विरूपाः । तेजोऽतिदीप्तिकुलपुष्टिविहीनवर्णाः कर्क्केतनस्य सदृशं वपुराहरन्ति ॥ कर्क्केतनं यदि परीक्षितवर्णरूपं प्रत्यग्रभास्वरदिवाकरसुप्रकाशम् । तस्योत्तमस्य मणिशास्त्रविदामभिज्ञा तुल्यन्तु मूल्यमुदितं तुलितस्य कार्य्यमिति ॥

कार्क्कोट । पु । नागराजविशेषे ॥

कार्क्कोटक । पुं । बिल्ववृक्षे ॥ स्त्री ॥ काँकरोल इति गौडभाषा प्रसिद्धे फललताविशेषे । किलासघ्ने । तिक्तपत्रे ॥ काद्रवेये । कर्क्कोटो नाम सर्पायो दृष्टीविषउच्यते । तस्य सर्पस्य सर्पस्त्वं तस्मै सर्पनमोऽस्तु ते । इति श्रुति प्रसिद्धे नागराजे ॥ अपिच । कर्क्कोटकस्य नागस्य दमयन्त्यानलस्य च । ऋतुपर्णस्य राजर्षेः कीर्त्तनं कलिनाशनमिति ॥

कर्क्कोटकी । स्त्री । पीतघोषायाम् । महाजाल्याम् । खखसा इति ख्याते फले ॥ कर्कोटकीफलं कुष्ठहृल्लासारुचिनाशनम् । श्वासकासज्वरान् हन्ति कटुपाकञ्च दीपनम् ॥ ईषद्विभिन्नमरिचैः परिपूर्णगर्भं तैलेन रन्धितसुसैन्धवपातयोगम् । वाह्लीकयुक्तपयसा विहिताभिषेकं कर्कोटकीफलमिदं रुचिकृत्तृकृच्छ्रम् ॥

कर्क्कोटिका । स्त्री । ककोडा इतिभाषाप्रसिद्धे । कर्कोटके । कूष्माण्ड्याम् ॥

कर्क्कोटी । स्त्री । कर्कोटिकायाम् ॥

कर्च्चरिका । स्त्री । कचौरीतिख्याते पिष्टकप्रभेदे ॥ इतिपाकराजेश्वरः ॥

कर्च्चरी । स्त्री । कचरीतिख्यातेफले ॥ चीराम्लकृतसंस्कारा शुष्का स्नेहविपाचिता । अरोचकादिरोगाणां कर्चरी काष्ठकर्त्तरी ॥ कर्चरी रुचिकृद्बल्या सुस्वादुरतिलेखनी । उष्णा पित्तकरी प्रोक्ता कफ कृत सारिका स्मृता ॥

कर्च्चूर । पु । कचूर इतिभाषा प्रसिद्धे गन्धसारे । द्राविडे ॥ कर्च्चूरो दीपनो रुच्य. कटुक स्तिक्त एवच । सुगन्धि कटुपाक. स्यात् कुष्ठार्शो व्रणकासनुत् ॥ उष्णो लघुर्हरेच्छासगुल्मवातकफ क्रिमीन् ॥ शब्याम् ॥

न । स्वर्णे ॥ कर्चति । कर्चव्यथने । खर्जूरादित्वादूरः । पृ॰ ॥

कर्च्चूरक । पुं । द्राविडके । कचूर इति भाषा ॥ स्वार्थे कन् ॥

कर्ण । पुं । पृथायाज्येष्ठसुते । वसुषेणे । चम्पापतौ ॥ सुवर्णालिहचे ॥ श्रवणेन्द्रिये । श्रोत्रे ॥ गुरुयुगले ऽऽ ॥ अरित्रे ॥ कीर्यते शब्दग्रहणाय क्षिप्यते यद्वा कीर्यते शब्दोऽस्मिन् किरतिशरीरे सुखं वा । कृविक्षेपे । कृवृजृसीतिनन् । बाहुलकात्गुणः ॥ यद्वा । कर्णयति । कर्णभेदने । अदन्त । अच ॥ यद्वा । करोति श्रब्दतानम् । डुकृञ्॰ । कृवृइत्यादिना नन् ॥

कर्णकण्डु । पुं । कर्णरोगविशेषे ॥ तस्यनिदानं यथा । मारुत कफसंयुक्तः कर्णकण्डुं करोतिचेति ॥

कर्णकीटी । स्त्री । कर्णजलौकायाम् । शतपद्याम् । कानसलाई इतिभाषा ॥

कर्णक्ष्वेड. । पुं । कर्णरोगविशेषे ॥ वायु पित्तादिभिर्युक्तो वेणुघोषसमं स्वनम् । करोतिकर्णयोः क्ष्वेडकर्णक्ष्वेड. सउच्यते ॥ इति माधव ॥

कर्णगूथम् । न । कर्णमले ॥ कर्णस्यगूथम् ॥

कर्णगूथकः । पुं । कर्णरोगविशेषे ॥ पित्तोष्मशोषितः श्लेष्मा जायते कर्णगूथकः इत्यस्य निदानम् ॥

कर्णचापः । पुं । कान्तपृष्ठाख्येधनुषि ॥ कर्णस्य राधेयस्य चापः ॥

कर्णजलौकाः । पुं । शतपद्याम् । गोजर् कानखजूरा इतिभाषा ॥

कर्णजलौका । स्त्री । शतपद्याम् । चित्राङ्ग्याम् । कानसलाई इतिभाषा ॥

कर्णजाहम् । न । कर्णस्यमूले ॥ तस्य पाकमूलइत्यादिना जाहच प्र० ॥

कर्णजित् । पुं । अर्जुने । गुडाकेशे ॥ कर्णं जयति । जि० । सत्सूद्विषे इत्यादिना क्विप् । तुक् ॥

कर्णदर्पणः । पुं । ताडङ्कनामनि कर्णभूषणे । कानतड्का इतिभाषा ॥

कर्णदुन्दुभिः । स्त्री । शतपद्याम् ॥

कर्णधारः । पुं । नाविके । काण्डारि इतिगौडभाषा । मल्लाह माँझी इति भाषा ॥ कर्णमरित्रम् धरति । धृञ् ० । कर्मण्यण् ॥

कर्णपाली । स्त्री । कर्णभूषणे । कानबाला बाली इत्यादिभाषा प्रसिद्धे ॥ कर्णपालिप्रदेशयोः ॥

कर्णपिशाची । स्त्री । देवीविशेषे ॥

कर्णपूः । स्त्री । कर्णपुरे । चम्पायाम् ॥

कर्णपुरम् । न । चम्पानगर्याम् । मालिन्याम् ॥

कर्णपुष्पः । पुं । मोरटलतायाम् ॥

कर्णपूरः । पुं । शिरीषवृक्षे ॥ नीलोत्पले ॥ अवतंसे । कर्णाभरणे ॥ अशोकवृक्षे ॥ कर्णम्पूरयति । पूरी० । कर्मण्यण् ॥

कर्णपूरकः । पुं । कदम्बवृक्षे ॥ न । शिरीषे ॥ नीलोत्पले ॥ वतंसे ॥

कर्णप्रतिनाहः । पुं । कर्णरोगविशेषे ॥ तस्य सम्प्राप्तिरूपे यथा । सकर्णगूथो द्रवतां यदा गतो विलायितो घ्राणमुखम्प्रपद्यते । तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकारः शिरसोऽर्द्धभेदकृदिति ॥

कर्णफलः । पुं । कानकिल माछ् इति गौड प्रसिद्धे मत्स्यविशेषे ॥

कर्णभूषणम् । न । कर्णाभरणे ॥

कर्णमलम् । न । कर्णगूथे ॥

कर्णमुकुरः । पुं । ताटङ्कनाम्नि कर्णभूषणे ॥

कर्णमोटिका । स्त्री । } चामुण्डादेव्याम् ॥
कर्णमोटी । स्त्री । }

कर्णरोगः । पुं । श्रोत्रव्याधौ ॥

कर्णलतिका । स्त्री । पाठायाम् । कानकापता इति भाषा इतिहेमचन्द्रः ॥

कर्णवंशः । पुं । मञ्चे ॥ इतिशब्दरत्नावली ॥

कर्णवर्जितः । पुं । सर्पे ॥ त्रि । बधिरे ॥

कर्णवेधः । पुं । कर्णघटकदोषनिवारणार्थं कर्णयोर्वेधने ॥ सोदरभ्रातृणां संस्काराणाञ्च पौर्वापर्यक्रम. । कर्णवेधस्याऽसंस्काररूपत्वात न तथा नियम । यथा । यद्यपत्यद्वयंतिष्ठेत् सम्भवोप्यपरस्यच । कर्णघटकं विजानीयान्नहित तत त्रयस्यच ॥ इत्याशङ्क्य तयो मध्ये शुद्धिर्यस्याथ वत्सरे । कर्णवेधोहितस्तस्य नात्रज्येष्ठविचारणा ॥ षट्कर्णोत्पत्तिमाशङ्क्य भानो शुद्धासमेपिच । कर्णावेध्यौ न दोषः स्यादन्यथा मरणम्भवेत् ॥ इतिमाण्डव्य. ॥

कर्णवेधनी । स्त्री । हस्तिकर्णवेधनास्त्रे । कर्णारायाम् ॥ इतित्रिकाण्डशेष. ॥

कर्णवेष्ट. । पु ।<br>कर्णवेष्टकम् । न ।<br>कर्णवेष्टनम् । न । } कुण्डले ॥ कर्णस्य वेष्टनम् ॥

कर्णशष्कुली । स्त्री । वेष्टने । कर्णगोलके ॥ कर्णमध्यवर्त्याकाशे ॥

कर्णशूल. । पु । कर्णरोगविशेषे ॥

कर्णसंस्राव. । पु । कर्णरोगविशेषे ॥ तस्य निदानसम्प्राप्तिरूपाणि यथा । शिरोभिघाताद्थवा निमज्जतोजले प्रपाकाद्थवापि विद्रधेः । स्रवेद्धिपूयं श्रवणोऽनिलार्दितःसकर्णसंस्राव इति प्रकीर्त्तित इतिमाधवः ॥

कर्णस्फोटा । स्त्री । कानफाटा इतिगैाड भाषा प्रसिद्धे लताविशेषे । कृष्णतण्डुलायाम् ॥

कर्णाट. । पु । देशविशेषे ॥ यथा । रामनाथ समारभ्य श्रीरङ्गान्तं विलेश्वरि । कर्णाटदेशो देवेशि साम्राज्यभोगदायक ॥ इतिशक्तिसङ्गमतन्त्रम् ॥

कर्णाटी । स्त्री । रागिणीविशेषे । मालवरागस्य नार्याम् ॥ हंसपदीवृक्षे ॥

कर्णानुज. । पुं । युधिष्ठिरे नृपे । अजातशत्रौ । कर्णस्य अनुज ॥

कर्णान्दु । स्त्री । कर्णपाल्याम् । कानतडका इति भाषा ॥ उत्तत्त्विप्तिकायाम् । कानकडा इतिगैाडभाषा प्रसिद्धे कर्णाभरणविशेषे ॥

कर्णान्दू । स्त्री । कर्णपाल्याम् ॥

कर्णाभरणक: । पुं । आरग्वधवृक्षे ॥

कर्णारा । स्त्री । नाल्याम् । कर्णवेधन्याम् ॥

कर्णारि । पु । अर्जुनपाण्डवे ॥ नदीसर्जवृक्षे ॥

कर्णास्फाल. । पु । करिणः कर्णचालने । कलजभङ्गायाम् ॥

कर्णि. । पु । कर्णाकारफलके वाणे ॥

कर्णिक । त्रि । कर्णिले ॥ विवृद्धौ कर्णौ यस्य । तुन्दादिषु स्वाङ्गाद्विवृद्धाविति ठक ॥

कर्णिका । स्त्री । करिहस्ताग्रे । पुष्करे ॥ करमध्याङ्गुलौ ॥ कामुकादिस्फुटौ ग्रे । बोटा इतिगौड भाषा ॥ अब्ज वराटे । बीजकोषे ॥ कर्णाभरण विशेषे । तालपत्रे । ढेढी इतिभा ॥ लेखन्याम् ॥ कुट्टन्याम् ॥ अग्नि मन्थवृक्षे ॥ अजशृङ्गीवृक्षे ॥ कर्ण स्या अलङ्कार कर्णभवो अङ्कुरो वा । कर्णललाटादितिकन् ॥

कर्णिकाचल । पु } सुमेरुपर्वते ॥
कर्णिकाद्रिः । पुं । }

कर्णिकार । पुं । आरग्वधविशेषे । पद्मवृक्षे । कृतमालके । छोटा धनबहेडा इतिभाषा ॥ कर्णिकार कटुस्तिक्त स्तुवर. शोधनो लघु. । रञ्जन सुखद. शोथश्लेष्मास्त्रव्रणकुष्ठजित् ॥ द्रुमोत्पले । कणियार इतिगौडभाषा ॥ कर्णिकाभियर्त्ति । ऋगतौ । कर्मण्यण् ॥

कर्णिकारक । पुं । द्रुमोत्पले ॥ कृतमाले । सुवर्णके ॥ स्वार्थे क ॥

कर्णिकी । पुं । हस्तिनि ॥ न । अम्बुजे ॥ कर्णिका अस्ति अस्य । व्री० इनिः ॥

कर्णी । पुं । वर्षपर्वतसप्तकान्तर्गतपर्वतविशेषे ॥ आरग्वधे ॥ कर्णिके ॥ विवृद्धौकर्णावस्य । तुन्दादिभ्यश्च इति चकारादिनि ॥

कर्णिल । पु । कर्णिनि । कर्णिके ॥ विवृद्धौ कर्णावस्य । तुन्दादित्वात् पक्षे इलच् ॥

कर्णीरथ । पु । स्कन्धवाह्ययाने । प्रवहणे । स्वर्वरिया चौपाला डोला मीनस पालकी तानयान इत्यादि भाषा प्रसिद्ध ॥ कर्णसाध्या अवगा क्रिया उपचारात् कर्ण । कर्णोऽस्यास्ति । इनि । कर्णीचासौरथश्च । शब्दमार्गेणरथो नवस्तुतोरथ ॥ यद्वा । सामीप्यात्कर्णशब्देन स्कन्धोल क्ष्यते । सोऽस्त्यस्य वाहकत्वेन । इनि । कर्णीचासौरथश्च । अन्येषाम पीतिदीर्घ. ॥

कर्णीवाम् । पु । आरग्वधे ॥

कर्णीसुत. । पुं । कंसासुरे । मूलदेवे ॥

कर्णेजप । त्रि । सूचके । पिशुने । दुर्जने । खले ॥ कर्णे जपति । जप० । स्तम्बकर्णयोरिति अच् । हलदन्तादिति अलुक् ॥

कर्णेन्दु । पुं । उत्तरिसिकायाम् । अर्द्धचन्द्राकृतिकर्णाभरणे ॥ कर्णपाल्याम् ॥

कर्ण्यम् । त्रि । कर्णहिते ॥ कर्णयोर्हित

म्। शरीरावयवाद्यत॥

कर्त्तनम्। न। छेदने॥ नारीणां सूत्र निर्म्मितौ। कातना इतिभाषा॥ कृ ती०। ल्युट्॥

कर्त्तरी। स्त्री। कृपाण्याम्॥ पत्रीकृत स्वर्णादि कर्त्तनोपाये। कात काती इतिभाषा॥ नापितोपकरणविशेषे। कैंची इतिभाषा॥ योगविशेषे॥ यथा। क्रूरमध्यगतश्चन्द्रो लग्नंवा क्रू रमध्यगम्। कर्त्तरी नामयोगोय कन्यानिधनकारक इति॥ अपिच। लग्नात् पापाद्व्यन्तजू व्ययार्थस्थौ य दातदा। कर्त्तरी नाम सा ज्ञेया मृ त्युदारिद्र्यशोकदेति॥ कृन्तति। कृतीछेदने। वाहुलकादर। यद्वा। कर्त्तनम्। घञ्। कर्त्तं राति। रादाने। आतोनुपेतिक.। गौरा दित्वान्ङीष॥

कर्त्तव्यम्। त्रि। करणीये। करणयो ग्ये। कार्य्ये॥ यस्मिन क्रियमाणे न दोष स्तत्कर्त्तव्यम्॥ तव्यप्रत्यय॥

कर्त्ता। पुं। परमेष्ठिनि॥ जगन्निवन्धने दाक्षे। क्रीयते विक्षिप्यते इतस्तत श्चाल्यते कार्यो येन। डु किञ्मे। ट च॥ त्रि। स्वतन्त्र. कर्त्तेतिनिरूपि ते षटकारकान्तर्गतकारकविशेषे॥ अ भीतार्थे प्रथमा अनुक्तार्थे तृतीयावि



भक्तिर्भवति। तस्यलक्षणम्। क्रि यानुकूलकृतिमत्त्वं कर्तृत्वम्॥ य. करोतिस॥ कृत्याश्रयः कर्त्तेति तार्किका॥ चेतनान्तर व्यापारा व्य वधानेन धात्वर्थनिष्पादकश्चेतन. कर्त्ता। कर्मकरणादिकारकचक्रप्र योक्तावा। इति प्रायश्चित्तविवेक.॥ कृतिमति॥ उत्पादके॥ कारणानु कूलव्यापारवति। अनुष्ठातरि॥ धा तूपात्तव्यापाराश्रये॥ क्रियायां स्वात न्त्र्येण विवक्षितेऽर्थे॥ सतुपञ्चविध.। यथा। क्रियामुख्यो भवेत् कर्त्ता हे तुकर्त्ता प्रयोजक। अनुमन्ता ग्रही ता च कर्त्तापञ्चविधः स्मृतइति॥ स त्रिविधोपि भवति। यथा। त्रिधैव ज्ञा यते कर्त्ता विशेषेण प्रतिक्रियाम्। योग्यत्वप्रतिषिद्धत्वविशेषणपदान्व यै.॥ अस्यार्थः॥ क्रियांप्रति प्रकार त्रयेण कर्त्ता विज्ञायते तस्य विवरण म्। स्वाध्यायोऽध्येतव्य इत्यत्र यो ग्यत्वेन लब्धविद्यस्त्रैवर्णिक.। १। अ श्नन्दद्यात् दीक्षितो न ददातीत्यत्र प्रतिषिद्धत्वेन दीक्षितेतर.। २। स्वर्गकामोयजेतेत्यत्र विशेषण पदान्वयेन स्वर्गकाम कर्त्ता ज्ञायते। ३॥ अहङ्करोमीत्याद्यभिमानवति॥ ज्ञानशक्तिप्रधानपञ्चीकृतपञ्चम

नाभूतकार्यो ऽहङ्कारोऽन्तःकरणबु
द्धिविज्ञानचित्तादिपर्य्यायशब्दवा-
च्यस्तादात्म्याध्यासेनात्मनि कर्त्तृत्वा
दिधर्म्माध्यारोपहेतुः अनात्मा भौ
तिको मायाकल्पितश्च सः ॥ क्रियाश्र
ये । इतरकारकाप्रयोज्यत्वे सति स
कलकारकाणां प्रयोक्तरि क्रियाया-
निर्वर्त्तके चिदचिद्ग्रन्थिरूपे कञ्चुका
मनावति पुरुषे ॥ स च सात्त्विकादि
भेदात् त्रिविधउक्तो भगवता । तत्र
सात्त्विको यथा । मुक्तसङ्गोऽनहंवा
दी धृत्युत्साहसमन्वितः । सिद्ध्यसि-
द्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते
इति ॥ राजसो यथा । रागी कर्म्मफ
लप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः । ह
र्षशोकान्वितः कर्त्ता राजसः परि-
कीर्त्तितः इति ॥ तामसो यथा । अ
युक्तः प्राकृतः स्तब्धः शठो नैष्कृतिको
ऽलसः । विषादी दीर्घसूत्री च कर्त्ता
तामस उच्यते इति ॥ अन्तः करणो
पहिते चिदाभासे ॥ करणोपहित-
स्य कर्त्तृत्वात् ॥ करोति । कृञ्० ।
तृच् तृन् वा ॥

कर्त्तृका । स्त्री । क्षुद्रखड्गे ॥

कर्त्तृत्वम् । न । कर्त्तृधर्म्मे ॥ भावेकर्म्म
णिवा त्वः ॥

कर्त्री । स्त्री । कर्त्तरिकायाम् ॥ करोति



। कृञ्० । स्नुसत्रचाविति तृच् ।
ऋन्नेभ्योङीप् ॥ छुरिकायाम् ॥

कर्द् । पुं । कर्द्दमे ॥ कर्द्दति । कर्द्द कु-
त्सिते शब्दे । पचाद्यच् ॥

कर्द्दट. । पुं । करहाटे ॥ पङ्के ॥ [illegible] ॥

कर्द्दनम् । न । कुक्षिशब्दे ॥

कर्द्दम । पु । ब्रह्मणश्छायाया मुत्पन्ने प्र
जापतिविशेषे । कपिलमुनेर्जनके ॥
पापे ॥ पङ्के । कीच काद इतिभाषा
॥ न । मांसे ॥ कर्द्दति । कर्द्द० । क
लिकर्द्दारमः ॥ त्रि । कर्द्दमवति ॥
अर्श० अच् ॥

कर्द्दमक. । पु । शालिविशेषे ॥

कर्द्दमाटकः । पुं । विष्ठादिनिक्षेपस्थाने ।
इत्याद ब्र०भा० ॥ इतिशब्दरत्नावली ॥

कर्द्दमी । स्त्री । मुद्गरे । मोगरा इति
भाषाप्रसिद्धे पुष्पे ॥ इति वैद्यकम् ॥

कर्पट. । पुं । न । लक्तके । जीर्णवस्त्रे ।
चिन्ता इतिभाषा ॥ प्रस्वेदादिमार्ज
नार्थं हस्तस्थवस्त्रखण्डे । इयद्रव्यं येन
भूयते तन्नक्तौ नक्तककर्पटयुक्तौ
तत्तुल्येनत्वेपिवर्त्तेते इति स्वामी ।
मुकुटस्तु मलिनत्वादिगुणयोगेन
वर्त्तेते इत्याह ॥ किरति कु
त्सितं वा । कृविक्षेपे कृहिंसायां वा
। करोति वा । क्विप् । कर् चासौ पट
श्च ॥ यद्वा । कपयमपटः । शकन्ध्वादिः ॥

पर्वतविशेषे ॥

कर्पटधारी । त्रि । मलिनजीर्णवस्त्रधारिणि भिक्षुके ॥

कर्पटिकः । त्रि । कर्पटान्विते । कर्पटधारिणि ॥

कर्पटी । त्रि । कर्पटान्विते ॥ अ॰ इनि ॥

कर्पर. । पुं । मूर्द्धास्थिनि । कपाले । खोपरी इति भाषा ॥ शस्त्रविशेषे ॥ कटाहे ॥ कल्पते । कृपूसामर्थ्ये । बाहुलकाद्‌रो लत्वाभावश्च ॥

कर्पराशः । पु । सकपालखण्डे ॥

कर्परालः । पुं । अक्षोटे । कन्दराले ॥ कर्परम् अलति । अलभू॰ । कर्मण्यण् ॥

कर्परिकातुत्थम् । न । तुत्थविशेषे । कर्पर्याम् ॥ गुडूचीयोगजाञ्जने ॥

कर्परी । स्त्री । दार्विकायाम् । क्वाथोद्भवतुत्ये । दारुहरिद्राया. क्वाथस्य तुत्ये । आवर्त्तननिष्पन्ने कृत्रिमरसाञ्जने । कल्पते । कृपू॰ । बाहुलकादरट् लत्वाभावश्च । टित्वात् ङीप् ॥

कर्परीतुत्थकम् । न । रसके । खपरिया थोथा इति ख्याते ॥ कर्परीतुत्थकं तुत्थादन्यत् तद्रसकं स्मृतम् । ये गुणास्तुत्थके प्रोक्तास्ते गुणा रसके स्मृताः ॥

कर्पासः । पुं । न । तुण्डिकेरीम् । अस्त्रियां नौ ॥ क्रियते । डुकृञ्॰ । कृञः पास ॥

कर्पासफलम् । न । कार्पासे । बिनौला इतिभाष ॥ कर्पास फलमिक्षुर्ल कषायं मधुरं गुरु । वातश्लेष्महरं रुच्यं विशेषेणास्थिवर्जितम् ॥

कर्पासी । स्त्री । कार्पास्याम् । कपासकावृक्ष इति भाषा ॥ कर्पासात् जातित्वात् गौरादित्वाद्वा ङीष् ॥

कर्पूर । पुं । न । घनसारे । चन्द्रसंज्ञे । सिताभ्रे । कपूर इति भाषा ॥ कर्पूरः शीतलो वृष्यश्चक्षुष्यस्तोषणो लघुः । सुरभिर्मधुरस्तिक्तः कफपित्तविषापहः ॥ दाहतृष्णास्यवैरस्यमेदोदौर्गन्ध्यनाशनः ॥ कर्पूरो द्विविध प्रोक्त पक्वा पक्वप्रभेदतः । पक्वात् कर्पूरत प्राहु रपक्वं गुणवत्तरम् ॥ अपिच । कर्पूरो नूतन स्तिक्त स्निग्धश्चोष्णास्तदाहद । चिरस्थो दाहशोषघ्न सर्वोत शुभकृत् परः ॥ पोतासभीमसेनाद्यो ऽस्य भेदाश्चसन्ति । तेचभीमसेने द्रष्टव्याः ॥ किरति कृणाति वा । करति करोति वा । कृविक्षेपे हिंसायां वा । कृञ॰ डुकृञ॰ वा । क्विप् । पूर्यते पूरी॰ । इगुपधेतिकः । कर्चासौ पूरश्च ॥ यद्वा । कल्पते । कृपू॰ । ख॰ ऊरः । बाहुलकात्लत्वा भा-

नेन वा ॥

कर्पूरक । पु । कर्चूरे ॥ कर्बूरके । कर्बूरके ॥

कर्पूरतिलका । स्त्री । उमाया सखी भेदे । जयायाम् ॥

कर्पूरतैलम् । न । कर्पूरस्नेहे । श्विमतैले ॥

कर्पूरनालिका । स्त्री । कर्पूरनालीति ख्याते पक्वान्नविशेषे ॥ यथा । घृताढ्यया समितया कृत्वा लम्बपुटं ततः । लवङ्गोषणकर्पूरयुतया सितया-न्वितम् ॥ पचेद्घृतेन सिद्धैषा ज्ञेया कर्पूरनालिका । संयावसदृशीज्ञेया गुणैः कर्पूरनालिका ॥

कर्पूरमणि । पुं । पाषाणभेदे । कर्पूराश्मनि ॥ कर्पूरमणिनामायं युक्त्या वातादिदोषनुत ॥

कर्पूररस । पु । रसकर्पूरे ॥

कर्पूरहरिद्रा । स्त्री । कर्पूरहलदीति ख्यातायाम् । सर्वकण्डूविनाशिन्याम् ॥

कर्पूराश्मा । पुं । उपरत्नविशेषे । कपूर चीनियेति ख्याते ॥

कर्पर । पुं । दर्पणे ॥ इतिजटाधरः ॥

कर्बर । पुं । व्याघ्रे ॥ रक्षसि ॥ कृणाति । कृञ् हिं° । कृगृशृवृञ्चतिभ्यः ष्वरच् ॥

कर्बरी । स्त्री । शिवायाम् ॥ पिशाच्याम् कोष ॥

कर्बुदार । पुं । कोविदारे ॥ नीलझिण्ट्याम् ॥ श्वेतकाञ्चने ॥

कर्बुदारक । पु । श्लेष्मातकवृक्षे ॥

कर्बुर । पु । पापे ॥ राक्षसे ॥ नानावर्णे । चित्रे । किर्मीरे ॥ नदीनिष्पावधान्ये ॥ न । जले ॥ काञ्चने ॥ धुस्तूरवृक्षे ॥ त्रि । चित्रवर्णवति ॥ कर्बति । कर्ब हिं° । कर्बत्यनेन वा । कर्बगतौ वा । कोऽथगोपध. । मद्गुरादयश्चेति उरच ॥ कर्बुराख्येन वा । बवयोरभेदादन्तस्थ मध्योपि ॥

कर्बुरफल । पुं । साकुरुण्डवृक्षे ॥

कर्बुरा । स्त्री । कृष्णवृन्तायाम् । पारुल इति गौड भाषाप्रसिद्ध वृक्षे ॥ बर्बरायाम् । बाबुइतुलसी इति गौड भाषा ॥ उरजन्ता टाप ॥

कर्बुरी । स्त्री । दुर्गायाम् ॥ इतित्रिकाण्डशेष ॥

कर्बूर । पुं । शठ्याम् ॥ द्राविडके । कचोरकडी इतिभाषा ॥ राक्षसे ॥ न । स्वर्णे ॥ हरिताले ॥ त्रि । चित्रिते ॥ कर्बति । कर्बगतौ । खर्जादित्वादूरः ॥

कर्बूरकः । पुं । कचूराख्ये ॥ स्वार्थे कः ॥

कर्मकरः । पुं । कीनाशे । यमे ॥ त्रि ।

भृत्ये ॥ वेतनाजीविनि । भरण्यभुजि । मूल्येन कर्मकुर्वति । कमेरा इति भाषा ॥ कर्म करोति । कृञ्० । कर्मणिभृताविति टः ॥

कर्म्मकरी । स्त्री । मूर्वालतायाम् ॥ बिम्बिकालतायाम् ॥ मूल्येन कर्मकुर्वन्त्याम् । दास्याम् ॥ टित्वान्ङीप् ॥

कर्म्मकर्त्ता । पु । कर्मात्मककर्त्तरि ॥ यथा । क्रियमाणन्तुयत् कर्म स्वयमेव प्रसिध्यति । सुकरैः स्वैर्गुणैः कर्त्तुं कर्मकर्त्तेति तद्विदुरिति ॥ त्रि । कर्मणः कर्त्तरि ॥

कर्म्मकाण्ड । पु । यावज्जीवमग्निहोत्रं जुहुयादित्यादिरूपेण चित्तशोधके कर्मप्रतिपादके वेदभागे ॥ संसारफलके ज्योतिष्टोमादिकर्मकलापे ॥ कर्मणांसमूहः । दूर्वादिभ्यः काण्डः ॥

कर्म्मकारः । पुं । वर्णसङ्कर जातिविशेषे । लौहकारे । लुहार इतिभाषा ॥ गोपाल्लात् तन्त्रवाय्यां वै कर्मकारोद्भूभूत् सुत । ब्रह्मवैवर्त्ते तु शूद्रायां विश्वकर्मणोजातइत्युक्तम् ॥ वृषे ॥ त्रि । भृतिंविना भारवहनादिकर्मकारके । बेगारी इतिभाषा ॥ कर्म करोति । कर्मण्यण् ॥

कर्म्मकीलकः । पु । रजके ॥ इतित्रिका

षड्शेष ॥

कर्म्मक्षम । पुं । अलङ्कर्मीणे । कर्मकरणसमर्थे ॥ कर्मसु क्षम । सप्तमीतियोगविभागात् समासः ॥

कर्म्मक्षेत्रम् । न । भारतवर्षे ॥

कर्म्मचोदना । स्त्री । कर्मविषयायां प्रेरणायाम् ॥ कर्म क्रिया पुरुषव्यापाररूपाऽर्थभावना तद्विषयाचोदना प्रेरणा विधिरूपा शाब्दीभावनेत्यर्थः ॥

कर्म्मजः । पु । कलियुगे ॥ स्वर्गादौ ॥ अदृष्टे ॥ वटद्रुमे ॥ त्रि । कर्मसम्भवे । कायिकवाचिकमानसकर्मोद्भवे ॥ कर्मणोजातः । जनी० । पञ्चम्यामजातावितिडः ॥

कर्म्मजगुणः । पु । क्रियाजन्यगुणः ॥ स च संयोगः । विभागः । वेगः । इति भाषापरिच्छेदः ॥

कर्म्मठ । त्रि । कर्मशूरे । प्रयत्नेन मारब्धं कर्मसमापयति यः सतथोच्यते ॥ कर्मकुशले ॥ कर्मणि घठते । कर्मणिघटोऽठच् ॥

कर्म्मण्यः । त्रि । कर्मयोग्ये ॥ कर्मणि प्रवीणे ॥ कर्मणि साधुः । तत्रसाधुरितियत् ॥

कर्म्मण्यभुक् । त्रि । भरण्यभुजि । कर्मकारे । वेतनोपजीविनि ॥ कर्मण्यं वेतनं भुङ्क्ते । भुज० । क्विप् ॥

कारक.

यिकासमुदाहृतेतिव्यासः ॥ मूलध नाऽविरोधिन्या प्रत्यब्देयपणात दशाद्दिरूपायांहवौ ॥ यथा। काया विरोधिनीशश्वत्पणार्द्धार्द्धातुकायि केति नारदः ॥ हलायुधस्तु पणार्द्धा वा इत्यत्र पणपादोनेतिपठित्वा पण स्यमूलधनस्य यावद्वत्सरात तावत् शश्वत्वर्षसहस्रमपि उत्तमर्णेन या वाह्यते प्राप्यते सा कायिकेति व्याख्या तवान्। तद्वाचा भोगलाभात्मगता अपराश्च तद्भिन्ना। इतिमिश्राः ॥

कार.। पुं। वधे ॥ निश्चये ॥ बलौ ॥ यत्ने ॥ यतौ ॥ तुषारशैले। हिमा द्रौ ॥ क्रियायाम् ॥ यथा। स्वाहा कारवषट्कारनमस्कारा दिवौकसा म्। स्वधाकारो मनुष्याणां स्वधाका रःस्वधाभुजामिति ॥ करणम् कार ॥ कर्मोपपदेकर्तृवाचक। यथा। क र्मकार. स्वर्णकार इत्यादि ॥ वि क्षिप्ते धान्यादिराशौ ॥ यथा। द्वौ कारौ ॥ करएव। प्रज्ञादण ॥ ह्न विक्षेपे। परिमाणाख्यायांसर्वेभ्यइ तिकर्मणि घञ। सर्वेभ्यइतिपञ्च मीनिर्देशात प्रकृत्याश्रयएव कदा रविति प्राप्तोऽप् बाध्यते नस्त्रर्थाश्र या स्त्रीप्रत्यया ॥

कारक.। त्रि। कर्त्तरि। क्रियाजनके ॥ भाष्ये करोति क्रियांनिर्वर्त्तयती तिव्युत्पत्तिदर्शनात्। ण्वुल ॥ न। क्रियोपाधिके ॥ साक्षात् क्रियानि मित्ते। कर्मोद्यन्यतमे। तानितु। कर्त्ता कर्म्मं च करणञ्च सम्प्रदानं त थैवच। अपादानाधिकरणेइत्याहु. कारकाणिषट् ॥ कर्त्ता १ यथा पु रुषे शिवोद्दष्ट। कर्म २ यथा रा मं प्रणमति। करणं ३ यथा नेत्रै. शिवोहष्ट.। सम्प्रदानम् ४ यथा ह रि. सङ्घः सुखं दद्यात। अपादानम् ५ यथा विभीषण पदाद्भ्रष्ट.। अधि करणम् ६ यथा रेमे शरदि गोवि न्द ॥ सर्वत्र सर्वकारकशक्तिसम्भवः। उक्तञ्च। अनेकशक्तियुक्तस्य विश्व स्यानेककर्मण। सर्वदासर्वथाभावा त् क्वचित किञ्चिद्विवक्ष्यतइति। य था। सर्वप्रयत्नेन च भूमिपालास्त स्मिन् प्रजाशुर्युधिसर्वएवेत्यत्रकर्मणो धिकरणविवक्षायांसप्तमीति ॥ कार कोद्भवजले ॥

कारकदीपकम्। न। अलङ्कारविशेषे। यथा। क्रमिकैकगतानान्तुगुम्फः कारकदीपकम्। गच्छत्यागच्छ तिपुन. पान्थः पश्यति पृच्छति ॥ यथावा। निद्राति स्नाति भुङ्क्ते चल ति कचभरान् शोषयत्यन्तरास्ते दी

व्यस्तचैनैवाय गदितुमवसरो भूय
आयाहियाहि । इत्युक्ते प्रभुणा
मसकृद्धिकृतैर्वारितान् द्वारि दी
नान् पश्यास्मानधिकन्येसरसि वरव
चामर्स्तैरङ्कैरपाङ्गैः ॥ अत्रोदाहरणे
श्रुतस्य पान्यस्य कर्तृकारकस्य गमना
दिष्वन्वयः ॥ द्वितीये च व्याकुलस्य
प्रभोः कर्तृकारकस्य निन्दादिष्वन्वयः
इत्येकस्यानेकवाक्यान्वयेन दीपक
त्वाच्छायापत्त्याकारकदीपकम् ॥

कारणीयः । पु । साल्वदेशे ॥ तद्दे
शीयजने बहुवचनान्तः ॥

कारणम् । न । करणे ॥ साधने ॥ वधे
॥ इन्द्रिये ॥ देहे ॥ कर्मणि ॥ का
यस्थे ॥ वाद्यभेदे ॥ गीतप्रभेदे ॥
कथने । बीजभावे ॥ ईश्वरे । अ
भिन्ननिमित्तोपादाने ॥ वेदान्ति
नोऽनुयाद्दीश्वरस्याभिन्ननिमित्तोपा
दानकारणतां श्रुत्वा पातञ्जलीयः-
सक्रोधमाह । भोः पाप कथमीश्वर
मेवविकारिणं कृत्वा विनाशधर्मि
णमुपपादयसि । अस्यायम्भावः वेदा
न्तीहि भगवतः सकलकार्योपादान
त्वं मन्यते तत्र सद्रवविकारितया
सङ्गच्छते । यथाहि मृत् स्वयं विकुर्वा
णा घटशरावाणामुपादानं भवति तथा
स्वयंविकुर्वन्नीश्वरो जगदुपादानमि



त्यभ्युपगन्तव्यम् । तथा च भगवतो
सद्रवविकारित्वाद्विनाशित्व सिद्ध
तीति ॥ सांख्यस्तदाह ननु प्रकृते
र्विश्वोत्पत्ति पुरुषस्तूदासीन इति
। एतच्छ्रुत्वा वेदान्ती सखेदमाह ।
दुर्बुद्धी यौ एतदपि न जानीत य
त सर्वप्रमेयजातं घटादिवत् कार्य
मिति प्रधानोपादानकारणमप्यपेक्ष
णीयमेवेति अनर्थविकारशङ्का मु
ग्धवधूविकल्पविलसितमिव । तथाहि
। भास्वज्ज्योतिः कथमनुदितानस्त
मितमप्रकाशं विश्वोत्पत्तौ भजति वि
कृतिं निष्कलं निर्मलं च । यत्त्वी
वेलोत्पन्नद्युतरुचा मञ्जुवारावलीनां-
प्रादुर्भावे भवति नभसः कीदृशो वा
विकारः इति ॥ हेतौ । बीजे । येन विना
यन्न भवति तस्मिन् ॥ तच्च निमित्तो
पादानभेदाद्द्विविधम् । कारणत्व
माह । अन्यथासिद्धिशून्यत्वे सति नि
यतपूर्ववर्त्तित्वम् । तच्च समवाय्यस
मवायिनिमित्तभेदात् त्रिविधम् ।
परमाणुपरिमाणभिन्नानां कारण
त्वमिति भाषापरिच्छेदः ॥ अणुपरिमा
णस्तु नकस्यापि कारणमिति सिद्धान्त
मुक्तावली ॥ कार्यते ऽनेन । ण्यन्ता
त् कृञो ल्युट् ॥

कारणकारणम् । न । प्रकृतेरधिष्ठानभू

कारण

ते प्रज्ञणि ॥

कारणगुणोद्भवगुण । पु ' कारणगुण पूर्वकगुणे ॥ तद्यथा । रूपम् १ रसः २ गन्ध ३ अपाकजस्पर्श ४ द्रवत्वम् ५ स्नेहः ६ वेग. ७ गुरुत्वम् ८ एकत्वम् ९ पृथक्त्वम् १० परिमाणम् ११ स्थितिस्थापकसंस्कार १२ । इति भाषा परिच्छेद ॥

कारणता । स्त्री । } हेतुत्वे । पश्य कारणत्वम् । न । } कारणे कारणत्वम् ॥ सततत्वादिरूपायां सर्वविकाराधिष्ठानतायाम् ॥

कारणमाला । स्त्री । अलङ्कारविशेषे । यथोत्तरत्वेन पूर्वस्य पूर्वस्यार्थस्य हेतुता । तदाकारणमालास्यात् ॥ उत्तरमुत्तर प्रति यथोत्तरम् । उदाहरणम् । जितेन्द्रियत्व विनयस्य कारण गुणप्रकर्षोविनयादवाप्यते । गुणप्रकर्षणजनो ऽनुरज्यते जनानुरागप्रभवाहिसम्पद ॥ अपिच । गुम्फ कारणमालास्याद्यथा प्राक्तनकारणे. । नयेन श्री श्रियात्या ग स्त्यागेन विपुल यश ॥ उत्तरोत्तरकारणभूतपूर्वपूर्व पूर्वपूर्व कारणभूतोत्तरोत्तरैर्वा वस्तुभि.कृतो गुम्फः कारणमाला । आद्योदाहृता द्वितीया यथा । भवन्तिनर-

कारणा

का पापात पापद्दारिद्र्य सम्भवम् । दारिद्र्यमप्रदानेन तस्माद्दानपरो भव ॥

कारणशरीरम् । न । सत्त्वप्रधानेऽज्ञाने । आनन्दमयकोषे । सुषुप्तौ ॥ अनाद्यविद्यानिर्वचनीय शरीरद्वय कारणमात्र सत्स्वरूपाऽज्ञानं यद स्तितत्कारणशरीरमित्याहु. ॥

कारणा । स्त्री । यातनायाम् । गाढवेदनायाम् ॥ नरकदुःखा यमयातनेति केचित ॥ चिजन्तात् कृणोयुवासश्रन्थेतियुच । टाप् ॥

कारणिक । त्रि । परीक्षके ॥ कारणे-ष्वरति । चरतीतिठक ॥

कारणोत्तरम् । न । प्रत्यवस्कन्दने ॥ सत्यत्वेनाङ्गीकृत्य ततप्रतिकूल रूपकारणंब्रूयात तदा तदुत्तरकं कारणोत्तरम् । तत त्रिविधम् । वलवत १ तुल्यबलम् २ दुर्बलम् ३ । आद्य यथा । मयाऽस्मात्त शतक गृहीतमितिसत्यम् किन्तु तत परिशोधितम् । द्वितीय यथा । मदीये यन्भूमि क्रमागतत्वादिति वादिना प्रतिवादिनोपि तथोत्तरम् । तृतीय यथा । ममेयम्भूमिः क्रमागतत्वात इतिवादिनुक्ते ममेयमभूमिः द्वयव र्षोपभुज्यमानत्वात् इति प्रत्युत्त

रम ॥

कारण्डव* । पु । खडशांस इति गौडे षु प्रसिद्धे हंसविशेषे ॥ अमरमालाऽड इति रमेशः । ईषत् रण्ड । ईषद र्थेचेतिकोः कादेश. । कारण्डवाति । षां० । आतोनुपेतिक ॥

कारण्डव्यूह. । पु । युद्धभेदे ॥

कारन्धमी । पुं । कांस्यकारे । ग्रोल्मि के । धातुवादरते ॥

कारमिहिका । स्त्री । कर्पूरे ॥

कारम्भा । स्त्री । प्रियङ्गुदत्ते ॥ ईषत् रम्भा । ईषदर्थेचेतिको. कादेशः॥

कारवः । पुं । काके ॥ का इतिरवे। ऽस्यसः ॥

कारवल्ली । स्त्री । कारवेल्ले ॥ कारवी रे ॥

कारवी । स्त्री । शतपुष्पायाम् । मधु रायाम् ॥ बड़जटा इति गौड़भाषा प्रसिद्धे दीप्ये । मयूरशिखायाम् ॥ मुषव्याम् । कलजीरो इति भाषा ॥ त्वक्पत्र्याम् ॥ कृष्णजीरके ॥ पृ श्वीरवेल्लाम् ॥ केमकलेमरीति । क्वाथ्ये । पचादच् कारवस्य मयूरस्ये सम् । तस्येदमित्यण ॥ कारवाति वा । कागतिगन्धनयोः । आतोनुपे तिकः । गौरादित्वात्ङीष्॥ यद्वा । कार वम् । हार्जि० । वल्लभा । सं० खिप् । कारमवति । अव रक्षणादौ । कर्मण्यण् । ङीप् ॥

कारवेल्ल । पु । करेला इतिप्रसिद्धे शाके । कठिल्लके । सुषव्याम् ॥ कार वेल्लं हिम भेदि लघु तिक्तमवातलम् । ज्वरपित्तकफास्रघ्नं पाण्डुमेह कृ मीन् हरेत् ॥ कारं वेल्लति वेल्लचल ने । कर्मण्यण् ॥

कारवेल्लक । पुं । कारवेल्ले ॥ स्वार्थेक ॥

कारवेल्ली । स्त्री । क्षुद्रकारवेल्ले ॥ त न्दुला कारवेल्लीस्ता विशेषाद्दीपनी लघुः । तद्गुणाकारवेल्ल गुणा ॥ का रवेल्ली फलतकेस्वेदितं छिन्नमर्दितं छ्। भर्जितंनवनीतेन सैन्धवेन स- मन्वितम् ॥ विदलितमुखमीषत्का रवेल्लीकठोरं पुनकितमिवतैलेसा धितंरामठेन । रचितमरिचचूर्णं सैन्धवेनातिपूर्णं सुखजितरसभाग्रं लोकतामातनोति ॥ कारवेल्ली फलम्भेदिलघुतिक्तंस्रशीतलम् । पि त्ताऽस्रकामलापाण्डुकफमेह कृ मीन् जयेत् ॥

कारस्कार: । पुं । किम्पाकद्रुमे । विष तिन्दौ ॥ कारस्करोति । डुकृञ० । कृञोहेतुताच्छील्यानुलोम्येषु इति टः । कारस्करो वृक्ष इति निपात- नात्सुट् ॥

कारस्कराटिका । स्त्री । कर्णजलौका याम् ॥

कारा । स्त्री । बन्धनालये । कारागारे ॥ दूत्याम् ॥ प्रसेवके । वीणाध का ष्ठभाण्डे ॥ सुवर्णकारिकायाम् ॥ व न्धने ॥ पीडायाम् ॥ कीर्यते । कृवि° । भि° अङ् । ऋदृशोऽङीतिगुणे दीर्घत्वनिपात्यते ॥

कारागारम् । न । बन्धनशालायाम् ॥ कारैव आगारम् । कारायै बन्धाय वा आगारम् ॥

कारागुप्तः । त्रि । बन्धनागारस्थे ॥ का रायां गुप्त ॥

कारापथ. । पु । देशविशेषे । लक्ष्म णात्मजयो रङ्गदचन्द्रकेत्वोर्विषये ॥

कारावरः । पु । पारशवाद्वैदेह्यामुत्पन्ने । चर्मकारे ॥ कारावरोनिषादात्तु चर्मकार प्रसूयते ॥

कारावेश्म । न । बन्धनालये । वधाङ्ग के ॥ कारैव कारायै वावेश्म ॥

कारि । स्त्री । क्रियायाम् ॥ त्रि । शिल्पि नि ॥ करोति । डुकृञ्° । कृञउदी चांकारुध्विति इञ ॥

कारिका । स्त्री । नटयोषिति ॥ कृतौ ॥ स्वल्पाक्षरद्व्यावद्वर्थसूचिका- श्लोकवितानाम् । विवरणश्लोके ॥ शि ल्पे ॥ यातनायाम् ॥ नापिताद्विकम णि ॥ करणम् । धात्वर्थनिर्देशे करो ते र्ण्वुल् । शिल्पादृद्धि' ॥ यद्वा । क रोति । ण्वुल । प्रत्ययस्थादितीत्व म् ॥

कारित. । त्रि । कुर्वन प्रेरित. कारित इत्युच्यते । कराया इतिभाषा ॥

कारिता । स्त्री । कारिकायाम् । कारि ताबृद्धौ । अधिकवृद्ध इतिभाषा ॥ यथा । ऋणिकेनतुयावृद्धिरधिका सम्प्रकीर्त्तिता । आपत्कालकृतानि त्यं दातव्या सा तुकारिता ॥ इति कात्यायन. ॥

कारी । स्त्री । कारिकायाम् । कटुपत्रि कायाम् ॥ कण्टकारी आकर्षकारी त्येषाद्विधा ॥

कारीरम् । न । भस्मनि ॥ करीरस्या वयवे । काण्डे ॥ टींट इतिप्रसिद्धे क रीरफले । तत्पुष्पे ॥ फलंकरीरस्य हि बीजवर्जितं संस्कारितं सोदक भाजनेषु । सुचिक्कणोप्वहदिनं सुस न्धितं सन्धानरीत्यासुधियाविपाचि तम् ॥ कारीरकटुकन्नाहि फलमु ष्णंरुचिप्रदम् । कफपित्तकरञ्चकि ञ्चितकषायंवातकृद्वरम् ॥ अस्यकुसु मप्राकस्तु । कारीरकुसुमंसुधर्मे निष्ठितंसघानितम् सघृतं ससाहैन विमिश्रितं सलवणं हिङ्ग्वाज्यसैन्धवैः

शम् । चिसंतकसरक्तुकाश्चिकमथ्यो
सदेसवाराऽन्वित भोऽज्ञा केनसमर्चि
तः प्रतिदिनश्रीपार्वतीशः स्वयम् ॥
कारीरकुसुमम्भेदि कटुक कफनाश
नम् । पित्तकृद्रुचिरं भव्यं कषायंप
व्यहन्मृतम् ॥ कारीरकुसुमं वक्ष्यशी
तलकृत्कफनाशनम् ॥ करीरस्यावय
वो विकारो वा । अण् । पलाशाद्य
ञ्क ॥

कारीरी । स्त्री । सुपूर्व्यादिफले नाग
विशेषे ॥

कारीषम् । न । शुष्कगोमयसमूहे ।
गिंडोरा उपलों कावेर इतिभाषा ॥
करीषाणां समूहः । भि० अण् ॥

कारुः । त्रि । शिल्पिनि ॥ कारयित्वात्
कर्म्माणि कारं पश्चाज्जयन्ययेदिति कृ
औणादिकम् ॥ कारुके ॥ पुं । विश्वक
र्मणि ॥ शिल्पे ॥ करोति । उकृञ्०
। कृवापेत्युण् ॥

कारुकः । त्रि । सूपकारादिशिल्पिनि
॥ स्वार्थे कः ॥

कारुककर्म्म । न । सूपकारादीनां कर्म्म
णि ॥ यैः कर्म्मभिः प्रचरितैः शुश्रूष्य
न्ते द्विजातयः । तानि कारुककर्म्माणि
शिल्पानिविविधानि च ॥

कारुचौरः । पुं । सन्धिचौरे ॥

कारुजः । पुं । करभे । गजार्भके ॥ फे
ने ॥ वल्मीके ॥ नागकेशरे ॥ गैरि
के ॥ शिल्पिनां चित्रे ॥ स्वयञ्जात
तिले ॥

कारुणिकः । त्रि । दयालौ ॥ करुणाशी
लमस्य । शीलमिति ठक् । करुणा-
प्रयोजनमस्यवा । प्रयोजनमिति
ठक् ॥

कारुवी । स्त्री । अजौकायाम् ॥

कारुण्यम् । न । परदुःखदुःखित्वे । क
रुणायाम् ॥ करुणः करुणावान् त
स्य भावः । ब्रा० ष्यञ् ॥

कारवः । पुं । कृष्णकाके । विहङ्गमे ॥

कारूषाः । पु । करूषदेशवासिषु । नृ
पभेदेषु ॥ बहुवचनान्तोयम् ॥

कारोत्तरः । पुं । सुराग्रभागे । सुराम
ण्डे ॥ कूपे ॥ त्रि । कार्य्योत्तमे ॥ कारे
ण क्रियया उत्तरः ॥

कार्कन्धवम् । न । कर्कन्ध्वाविकारे ॥ त
दवयवे ॥ बिल्वाद्यण् ॥

कार्कश्यम् । न । कठोरतायाम् ॥ कर्क
शस्यभावः । ष्यञ् ॥

कार्णाटः । पुं । कर्णाटदेशे ॥ स्वा० अ
ण् ॥

कार्त्तवीर्य्यः । पुं । चन्द्रवंशीयकृतवीर्य
राजपुत्रे । अर्जुने । हैहये । हरेश्च
क्रावतारे ॥ अस्य ध्यानम् । उद्यदर्क
सहस्रकान्तिरखिलक्षोणीधवैर्व-

न्दितोहस्तानांशतपञ्चकेनतु दधंशा पानिषूस्तावता । कालेनाटकमाला यापरिवृतश्चक्रावतारोदरे। पाया तस्यन्दनगेनयया भवसन' श्रीकार्त्त वीर्योन्नप इति ॥ जैनराजचक्रव र्त्तिविशेषे । सुभूमे ॥ कृतवीर्यस्या पत्यम् । अण् ॥

कार्त्तस्वरम् । न । स्वर्णे । हेमनि ॥ कृतस्वरे आकारविशेषे भवम् । अ ण ॥ कृता. पठिता. स्वरायेन तस्यैवा इदम् । शेषइत्यण् ॥ धुस्तूरे ॥

कार्त्तान्तिक । पु । दैवज्ञे । मौहूर्त्ति के। ज्योतिर्विदि ॥ कृतान्तंवेत्ति। क्रतूक्थादिसूत्रान्ताट्ठक ॥

कार्त्तिक । पु । स्कन्दे । कार्त्तिकेये ॥ ऊर्ज्जे । शरद्दतोर्द्वितीयेमासे । बा हुले ॥ अनजातस्यफलम् । दच क्र ये विक्रयणे धनाढ्य स्याद्यावदूको ऽ खिलकोशलश्च । य कार्त्तिके का र्त्तिकरूपधारी जातो भवेद् युद्धवि शारदश्चेति ॥ वर्षविशेषे । सचकृ त्तिकारोहिण्योरेकतरस्मिन् इह स्पतेरस्तोदयेकतरसम्बन्धे भवती ति मलमासतत्त्वम् ॥ कार्त्तिकी पौ र्णमास्यस्मिन । विभाषा फाल्गुनी ति पाणिकोग ॥

कार्त्तिकिक । पु । कार्त्तिकमासे ॥ का र्त्तिकी पौर्णमास्यस्मिन् । विभाषा- फल्गुनी श्रवणा कार्त्तिकी चैत्रीभ्यः । इतिठक् ॥

कार्त्तिकी । स्त्री । कार्त्तिकपौर्णमास्या म् ॥ कृत्तिकया युक्ता पौर्णमासी । न क्षत्रेण युक्त' कालः इत्यण् । त तोङीप् ॥

कार्त्तिकेय । पुं । कुमारे । महासेने ॥ कृत्तिकानामपत्यम् । तत' पोषि तत्वात । स्त्रीभ्योढक ॥ अस्यध्यानं यथा । कार्त्तिकेयं महाभागं मयूरो परि संस्थितम् । तप्तकाञ्चनवर्णा भं शक्तिहस्तंवरप्रदम् ॥ द्विभुजं श त्रुहन्तारं नानालङ्कार भूषितम् । प्रसन्नवदनं देवं सर्वसेनासमावृत मिति ॥

कार्त्तिकेयप्रसू. । स्त्री । दुर्गायाम् ॥

कार्त्तिकेयवनम् । न । शरवणे ॥

कार्त्तिकोत्सव । पुं । कौमुद्याम् । का र्त्तिक्या पूर्णिमायाम् ॥ दीपोत्सव तिथौ ॥

कार्त्स्न्यम् । न । साकल्ये ॥ कृत्स्नस्य- भाव । ष्यञ् ॥

कार्प्पट । पुं । जतुनि । लाक्षायाम् ॥ कार्य्यिणि । कार्यार्थिनि । उमेदवा र इत्यारवी इति पारस्यभाषा ॥ इ- तिहेमचन्द्र ॥ वस्त्रे ॥ स्वा० अण् ॥

तार्किकमते प्रागभावप्रतियोगिनि घटपटादिरूपे विकारे ॥ कार्यंप्रति कारणंत्रिविधम् । समवायिकारणम् १ यथा घटकार्यंप्रतिकपालम् । असमवायिकारणम् २ यथा घटकार्यंप्रतिकपालसंयोगादि । निमित्तकारणम् ३ यथा घटंप्रतिदण्डचक्रादीति ॥ कार्य्याणां नियोगविकल्पसमुच्चया भवन्ति । अनेनैवोपायेन नान्येनेतिनियोग । अनेनवाऽनेनवेतिविकल्प' । अनेनचेतिसमुच्चयः ॥ विवादे ॥ यथा । यस्मात्कार्यसमारम्भश्चिरात्तेन विनिश्चित । तस्मात्लभते कालमभियुक्तस्वकालभाक् ॥ इति कात्यायन ॥ अपूर्वे ॥ यथा । विधिप्रत्ययस्य कार्यंप्रक्तिरिति मीमांसका. ॥ त्रि । सम्पादनीये । कर्त्तव्ये ॥ क्रियते इति । डुकृञ् ० । विभाषा कृवृषोरितिक्यवभावे ऋहलोर्ण्यत् । इति ॥

कार्य्यकुशल. । त्रि । कर्मक्षमे । कर्मठे ॥

कार्य्यता । स्त्री । कार्यत्वसङ्गतौ ॥ भावे तल ॥

कार्य्यत्वम् । न । कार्यतासङ्गतौ ॥ अभूत्वाभावित्वे ॥ भावे त्व' ॥

कार्य्यपुट' । पु । क्षपणे ॥ उन्मत्ते ॥ अ नर्थकरे ॥

कार्य्यप्रद्वेष' । पुं । आलस्ये ॥

कार्य्या । स्त्री । कारीवृक्षे ॥

कार्य्यी । त्रि । यस्य निर्दिश्यते कार्यंतस्मिन ॥ कर्मार्थिनि ॥

कार्शानव । त्रि । आग्नेये ॥ कृशानोरिदम् । अण ॥

कार्श्मरी । स्त्री । काश्मरीवृक्षे । गम्भार्याम् ॥

कार्श्यः । पु । कार्श्यं । सालवृक्षे ॥ कर्चूरे ॥ सक्तुवृक्षे ॥ न । कृशत्वे ॥ कृशस्य भाव. । वर्णदृढादिभ्य ष्यञ्चेतिष्यञ् ॥

का.र्ष. । पु । कर्षके ॥ कृषि' भोजनमस्य । छत्रादिभ्योण ॥

कार्षक । पु । कर्षके ॥ कर्षति । कृष० । कृषेर्वृद्धिश्चोदीचामिति क्वुन ॥

कार्षापण । पुं । न । कार्षिके । रजतरूप्ये ॥ षोडशपणे ॥ ताम्रिकेपणे ॥ कार्षापणस्तु विज्ञेयस्ताम्रिक' कार्षिक पण । इतिमनूक्ते ॥ कर्षस्यायम् । तस्येदमित्यण् । आपणनम् । पण० । नित्यपण. परिमाण इत्यप । गोचरसञ्चरेतिघो वा कार्षस्य कार्षेण वा आपण ॥

कार्षि: । स्त्री । कृषिहन्तौ ॥ कृषति । कष० कृषेर्वृद्धिश्चेति इञ् ॥

कार्षिक: । पुं । कार्षापणे । रूप्यकाने

भूतभविष्यद्वर्त्तमानात्मक'कालाइति वैयाकरणा ॥ कालोऽस्मि भगवद्वि भूति. । कालः कलयतामहम् । क लयतां सङ्ख्यानं कुर्वतामध्ये ॥ क्रियामात्रुपहितः सर्वस्य सहर्त्तापरमे श्वर, कालः ॥ अहमेवाक्षय कालः । अक्षयकालाभिमान्य ऽक्षय परमे श्वराख्य.काल. ॥ कलनात् सर्वभूतानां ब्रह्मादीनामनिमेषत । कालश ब्देन निर्दिष्टो ह्यखण्डानन्दअद्वयः ॥ कैवल्यश्रुत्याय' । कलसङ्ख्याने । पचाद्यजन्तात् प्रज्ञाद्यण् ॥ कल्य ते । कलसङ्ख्याने शब्दे च । कर्मणि घञ् ॥ कालयति सर्वमिति वा । कलप्रेरणे । ण्यन्तात पचाद्यच ॥ यद्वा । काल्यते । कालउपदेशे । घञ् ॥ यस्याऽहं'प्रथमं रूप मरूपस्तत्यानि ग्रा । सन्ध्याच परमेशस्य तस्मै कालात्मनेनम. ॥

कालक' । पु । जटुले । जतुके । पिप्रौ । देहस्थचिह्न विशेषे । लसन इति भाषा ॥ अलगर्द्दे ॥ न । कालशाके ॥ यकृति ॥ अनित्ये वर्णो रक्तोपार्थे कालाश्चे तिकन् ॥ कालक पट कालिकाशाटी कालकमुखम् ॥ कालयति । कलक्षेपे ॥ ष्वु० । ण्वुल् ॥

कालकटङ्कटः । पु । शिवे ॥

कालकण्ठ । पु । शिवे ॥ पीतसारे ॥ मयूरे ॥ खञ्जने ॥ कलविङ्के ॥ दात्यूहे ॥ कालः कृष्णवर्णं कण्ठो यस्य सः ॥ काले प्रावृषिकण्ठो ध्वनिरस्यवा ॥

कालकण्ठक । पु । दात्यूहपक्षिणि ॥ कालकण्ठे ॥ काल कण्ठोऽस्य । कप ॥ स्वा० कन्वा ॥

कालकन्दक. । पु । जलसर्पे ॥

कालकन्या । स्त्री । जरायाम् ॥ कालस्यकन्या ॥

कालकर्णिका । स्त्री । अलक्ष्म्याम् ॥ कालस्यकर्णिका ॥

कालका । स्त्री । कालकेयनाम्नोऽसुरगणस्यजनन्याम् ॥

कालकाल । पु । सदाशिवे । देवदेवे ॥

कालकील: । पु ।<br>कालकीलक' । पु ॥ } कोलाहले ॥

कालकुष्ठम् । न । पर्वतीयमृत्तिकाविशेषे । कङ्कुष्ठे । विरङ्गे ॥

कालकूटम् । न । विषे ॥ वोले ॥ पु । न । स्थावरेतीव्रविषविशेषे ॥ देवासुररणेदेवैर्हतस्यपृथुमालिन. । दैत्यस्यरुधिराज्जातस्तरुरश्वत्थसन्निभ ॥ निर्यास.कालकूटोऽस्यमुनिभिः परिकीर्त्तितः । सोऽहिक्षेत्रेशृङ्गवेरेकोङ्कणे मलये भवेत् ॥ कालसर्पि

कूटयति । कूटपरिदाहे । बु० कर्म
ण्यण् ॥ कालस्य कर्मणो मन्त्रो वाकू
टोऽग्निरिवेति वा ॥

कालकृत् । पुं । सूर्ये ॥ कालं करोति ।
डुकृञ्० । क्विप् । तुक् ॥

कालकृत. । पु । सूर्ये ॥ त्रि । कालजा
ते ॥ यथा । सर्वं कालकृतं मन्ये
कालो हि बलवत्तर. । इतिपु ॥

कालकेशी । स्त्री । नील्याम् ॥

कालखञ्जनम् । न । यकृति ॥ इतिहे
मचन्द्र ॥

कालखञ्ज. । पुं । महानरकविशेषे ॥

कालखण्डम् । न । दक्षिणकुक्षिस्थे मांस
खण्डे । यकृति ॥ कालञ्च तत् खण्डञ्च ।

कालग्रन्थिः । पुं । वत्सरे ॥

कालघण्टः । पु । योगविशेषे ॥ यथा ।
षष्ठीशीतांशुवारे परिहर दशमीं
सप्तमीम्भार्गवेपि अष्टम्यादित्यपूर्वा
बुधदिननवमीं सौरिवारे द्वितीयाम् ।
एकादश्याञ्च भौमे दशशतकिरणे च
त्रयोदशीञ्च सर्वारम्भं न कुर्यात्
नयति विपदं कालघण्टो हि योग इ
ति ॥

कालञ्जत. । पुं । काककासुन्दे इतिगौ
डभाषाप्रसिद्धे कासमर्दे । कसौंदी
इतिभाषा ॥

कालचक्रम् । न । कालस्वरूपे चक्रे ॥



यथा । कालोद्विविधे ऽवसर्पिण्युत्स
र्पिणीप्रभेदत । सागरकोटिकोटी
नाविंशत्या स समाप्यते ॥ अवसर्पि
ण्यां षड्रा उत्सर्पिण्यां तएवविपरी
ता । एवं द्वादशभिररैर्विवर्त्तते का
लचक्रमिदम् ॥ इतिहेमचन्द्र. ॥ म
हारम्भरूपे ॥

कालचिन्तक. । पुं । ज्योतिर्विदि । दै
वज्ञे ॥

कालज्ञ. । पुं । कुक्कुटे ॥ त्रि । अध्याय
ज्ञाताइतिविदुषि ॥ वङ्गेदमित्थं कार्ये
न यावत्कालविपर्यय । तमेव चागते
काले भिन्द्याद्घटमिवाश्मना ॥ का
लं जानाति । ज्ञा० । क० ॥

कालञ्जरः । पुं । योगिचक्रसम्मेलके ॥
भैरवे । शिवे ॥ पर्वतविशेषे ॥ दे
शविशेषे ॥ कालञ्जरस्थाने सिद्धपी
ठे ॥

कालञ्जरा । स्त्री ।
कालञ्जरी । स्त्री । } चण्ड्याम् ॥

कालताल । पु । तमालवृक्षे ॥

कालतिन्दुक । पुं । काकेन्दौ । कुपी
लुके ॥

कालदण्ड. । पुं । योगविशेषे ॥ काल
शब्दे ॥

कालधर्म्मः । पुं । मृत्यौ ॥ समयस्वभा
वे ॥ कालस्य धर्म ॥

कालनियोगः । पुं । दैवाज्ञायाम् ॥ कालस्य नियोगः । कालकृतो वा नियोग ॥

कालनिर्यासः । पुं । गुग्गुलौ ॥

कालनेमि. । पु । राक्षसविशेषे ॥ हिरण्यकशिपुपुत्रे । दैत्यविशेषे ॥

कालनेमी । पुं । कालनेमौ ॥

कालनेमिनिहा । पुं । श्रीपतौ । विष्णौ ॥ कालनेमिंनिजघानेति ॥

कालनेमिरिपु. । पु । } विष्णौ ॥
कालनेमिहा । पुं । }
कालनेम्यरि । पुं । }

कालपर्ण. । पुं । तगरवृक्षे ॥

कालपालकम् । न । कङ्कुष्ठमृदि ॥

कालपाश । पुं । यात्रायां वर्जनीयविशेषे ॥ उत्तरादिषु पूर्वान्तदिक्षु सूर्यादित क्रमात् । काल स्तत्सम्मुखे पाशो निशायान्तु विपर्यय ॥ सम्मुखस्थौ कालपाशौ यात्रायाञ्च विवर्जयेत ॥

कालपीलुक । पु । कुपीलौ ॥

कालपुच्छ. । पु । मृगविशेषे ॥ गुर्वौ रेणसम. कालपुच्छो मुनिभि रीरित ॥

कालपुरुष । पु । यमसहाये ॥ ज्योतिश्शास्त्रे ॥ यथा । किन्त्वस्य कालपुरुषाख्यमहार्णवस्य गच्छेत् कदाचि दल्पधिषमेनसापि पारम् । इति ॥ नराणां शुभाशुभज्ञानार्थं जन्मलग्नादिद्वादशराशिकल्पिते ज्योतिश्शास्त्रप्रसिद्धे पुरुषाकारे ॥

कालपृष्ठः । पुं । मृगविशेषे ॥ कङ्कपक्षिणि ॥ न । कोदण्डमात्रे । धनुर्मात्रे ॥ कर्णचापे । कर्णस्य पृथातनयस्य धन्वनि ॥ कालो यम इव पृष्ठ मस्य । कालवर्णं वा पृष्ठ मस्य ॥

कालमेषी । स्त्री । श्यामलतायाम् ॥

कालप्रभातम् । न । शरदृतौ ॥ इति त्रिकाण्डशेष ॥

कालभाण्डिका । स्त्री । मञ्जिष्ठायाम् ॥

कालमान. । पु । कृष्णार्जके । कृष्णतुलस्याम् ॥ राजनिर्घण्टे कालमाल इ ति पाठः ॥

कालमुष्क' । पुं । घण्टापाटलिवृक्षे ॥

कालमूलः । पुं । रक्तचित्रके ॥

कालमेघः । पु । श्यामलेसघनेघने ॥

कालमेशिका । स्त्री । कालमेश्याम् ॥ काले मिश्यते । मिश शब्दे । कर्मणिघञ् । गौ° ङीष् । स्वार्थे कन् ॥

कालमेषी । स्त्री । कालमेषिकायाम् । मञ्जिष्ठायाम् ॥ त्रिरुति ॥ सोमराज्याम् ॥ कालंवर्णं मिषति । मिष स्पर्द्धायाम् । कर्मण्यण् । गौरा

दिस्थान डोष ॥

कालयुक्त । पु । वत्सर ॥ यथा । गोमि व्योविनश्यन्तियेचान्यनटनर्त्तका । वासवोवर्षते देविशस्यञ्च नविजायते ॥ तिलसर्षपमाषादिकार्पासानां महार्घता । गोमहिष्य सुवर्णादि कांस्यताम्राचशेषम ॥ तत्त्वं देविविक्रीयकर्त्तव्योधान्यसञ्चय: । तेन धान्येन लोकोयं निस्तरिष्यति दुर्दिनम् ॥ पार्थिवामोपका दीना: कालयुक्ते प्रपीडित: ॥ इति ॥

कालरात्रि । स्त्री । सर्वभूतापहारिण्यां मृत्युदेव्याम् ॥ सर्वमारकस्यापिका लस्य रात्रिर्नाशिका । प्रलयेकालस्यापिनाशात् ॥ कालरात्रिर्यमभगिनीतिभावप्रकाश. ॥ कल्पान्तरात्रौ ॥ भीमरथ्याम् ॥ निशाविशेषे । दीपावल्याम् ॥ दीपावलीतुयाप्रोक्ता कालरात्रिश्च सामतेत्यागमवचनात् ॥ दुर्गाया. शक्तिविशेषे ॥ दैनन्दिनप्रलयेऽपीतिकश्चित् ॥ काल: संहारोमरणं तदुपलक्षिता रात्रि: ॥

कालरुद्र: । पु । कालाग्निरुद्रे ॥

काललवणम् । न । विड्लवणे ॥

काललोहम् । न । तिखा इति गौड भाषाप्रसिद्ध कृष्णायसे । वक्रमे । तीक्ष्णे ॥



कालवित् । पु । ज्योतिर्विदि ॥ ज्योतिर्विद्धि काल. परमार्थ इत्याह । तन्न । कालैक्ये मुहूर्त्तादिव्यवहारायोगात । तत्नानात्वेपि न स्वातन्त्र्यम् । अन्यविषयत्वेन प्रतीते.। उदय कालइत्यादिनाक्रियाधर्मत्वेन प्रतीते. स्फुटत्वात् । नचक्रियाधर्मत्वं कालेपितदुत्पत्तिदर्शनात् । अन्य आकाशानवच्छिन्नत्वेनक्रियानित्यत्वापातात् ॥ त्रि । अवसरज्ञे ॥

कालविभक्ति । स्त्री । मासर्त्त्वयनादौ ॥

कालहन्त. । पु । कुष्ठध्नवृक्षे ॥

कालहन्ती । स्त्री । पाटलावृक्षे ॥

कालवेला । स्त्री । क्रियानर्हकालविशेषे ॥ यथा । पञ्चविषडुक्तिनगेन्द्रभेदद्विदस्तिनग्रापिदिवा ऽथरात्रौ । पटतूर्यरामाश्विशराग्निचन्द्रभागास्तुर्थ्यादिषुकालवेला इति ॥ कालशर्मेत्तरशब्दाभार्द्धरूपावेला ॥ इतिदीपिका ॥

कालशाकम् । न । नाडिकम् शाकशाकम् कालकमितिपर्यायप्रसिद्ध शाकविशेषे । नरिका मरचा इतिगौडभाषा ॥ कालशाकंसरं रूक्षं वातकृत्कफशोफहृत् । बल्यरुचिकरं मेध्यं रक्तपित्तहरंहिमम् ॥

कालशालि. । पुं । कृष्णशालौ ॥

कालशेयम् । न । गोरसे । घोले ॥ कलश्याम् मन्थनपात्रे भवम् । इति कुक्षिकलशिवस्त्यस्यहेर्ढञ् ॥

कालसरोध । पुं । चिरकालावस्थाने ॥

कालसर्प्प । पु । कृष्णसर्पे । महाविषे ॥

कालसार । पु । कृष्णसारे मृगे ॥ न । पीतचन्दने । कालानुसार्य्ये । कालिया इति गौडभाषा ॥

कालसूत्रम् । न । अयुतयोजनपरिमण्डले ताम्रमये तप्तसमदेशे उपर्य्यधस्तादग्न्यर्काभ्यामतितप्यमाने नरके ॥ कुलालचक्रसूत्रच्छेदनरूपेन रके ॥

कालसेयम् । न । घोले ॥

कालस्कन्ध । पु । तमालवृक्षे ॥ तिन्दुकवृक्षे ॥ जीवकद्रुमे ॥ दुष्खदिरे ॥ उदुम्बरे ॥ काल स्कन्धो यस्य ॥

कालहानि । स्त्री । विलम्बे ॥

कालहीन । पुं । लोध्रे ॥

काला । स्त्री । कृष्णत्रिवृतायाम् ॥ कालयति । कलविक्षेपणे । ण्यन्त । पचाद्यच ॥ मञ्जिष्ठायाम् ॥ नीलिकायाम् ॥ कल्यते । कलक्षेपे । कर्मणि घञ् ॥ कृष्णजीरके ॥ अश्वगन्धायाम् ॥ पाटलावृक्षे ॥ कालियाकडा इतिगौडभाषाप्रसिद्धे कुलिकवृक्षे ॥ कालोवर्णोऽस्यास्ति । अर्शआद्यच ॥ गौर्य्याम् ॥ वर्णस्याविवक्षाया जानपदेतिन ङीष ॥

कालाचरिक । त्रि । शिचिताचार्य्ये ॥

कालाख्या । स्त्री । नवविधासु तुष्टिषु तृतीयायाम् ॥ यथा । प्रव्रज्यापिन सद्योनिर्वाणदेति सैवकालपरिपाकमपेक्ष्यसिद्धिरैविधास्यति अलमुत्तलतयेत्युपदेशे यातुष्टि साकालाख्या ओघ उच्यते ॥

कालागुरु । न । कृष्णागुरुणि ॥ कालवनत अगुरुच ॥ अयंप्राग्ज्योतिषे भवतीतिप्रसिद्धि ॥

कालाग्निरुद्र । पुं । संहारकारिरुद्रे ॥

कालाग्नि । । पञ्चमुखे रुद्राक्षे ॥

कालाङ्ग । पु । काद्रवेयप्रभेदे ॥

कालाङ्गम् । न । कालपुरुषस्याङ्गे ॥ यथा मेष शिरोवृषोवक्त्रं मिथुनंबाहुयुग्मकम् । कर्कटोहृदयञ्चैवसिंहस्तूदरमेवच ॥ कन्याकटिस्तुलावस्तिर्वृश्चिकोगुह्यमेवच । धनुरूरूमृगोजानूकुम्भोजङ्घप्रकीर्त्तिते ॥ मीनपादद्वयञ्चैव कालाङ्गानि यथाक्रमम् ॥ इतिकालनरस्याङ्गेसदसद्ग्रहयोगत । पुंसामपितदङ्गेषु शुभाशुभफलंवदेदिति ॥

कालाञ्जनी । स्त्री । नीलाञ्जन्याम् । रेचन्याम् ॥

कालातीतः । पुं । कालात्ययापदिष्टे॥ कालातिक्रमणे ॥ कालस्यमतीतम् ॥ चि । अतीतकाले ॥

कालात्ययापदिष्ट । पु । कालातीते । बाधितहेतौ । कालस्यसाधनकालस्य अत्ययेऽभावे अपदिष्टः मयु क्तोहेतु एतेनयस्यहेतोः साध्याभाव प्रमाणान्तरेण सिद्धः सकालात्ययापदिष्ट । यथा । वह्निरनुष्णः कृतकत्वात । अत्रानुष्णत्वसाध्यतदभाव उष्णत्वम् ततस्पर्शेन प्रत्यक्षेणगृह्यते इति ।

कालानल । पुं । प्रलयाग्नौ ॥

कालानुनादी । पु । भ्रमरे । रोलम्बे॥ कलविङ्के ॥ कपिञ्जले ॥

कालानुसारिवा । स्त्री । तगरपादिके । तगरमूल इति भाषा ॥ शीतल्याम् । शिउलीझोप इतिगौडभाषा ॥

कालानुसारकम् । न । तगरे ॥ पीतचन्दने ॥

कालानुसारि । पुं । शैलेये । शैलजनामगन्धद्रव्ये ।

कालानुसार्य्य. । पु । न । शैलेये ॥ कालीयके । गौडभाषया कालियाभाम पीतवर्णेसुगन्धिकाष्ठे ॥ शिंशपावृक्षे ॥ तगरे ॥ कालेनऽनुस्त्रियते । गतौ । कर्म्मणोण्यत ।

कालानुसार्य्यकम् । न । शैलेये ॥

कालान्तरविष । पु । मूषिकादौ ॥

कालाप । पु । सर्पभोगे ॥ राक्षसे ॥ चि । कलापव्याकरणाज्ञे ॥

कालापकम् । न । यत्नुषा श्लोकानाम समूहे ॥

कालायसम् । न । लोहे ॥ कालञ्चतत् अयश्च । अनोश्माय सरसांजातिसंज्ञयोरितिटच् ॥

कालायोनम् । न । कलायानाङ्क्षेत्रे ॥ कलायानाम् भवनक्षेत्रम् । धान्यानाम्भवनेक्षेत्रेखञ् ॥

कालाशुद्धि । स्त्री । शुभकर्म्मानर्हसमये ॥ सायथा । बृहस्पतिचारस्तुललशाख्यस्तेगुरुशुक्रयोः । गुरौसकरसिंहस्थे चयमास धिमासयोः ॥ चयोदशादिनेपक्षेगुर्वादित्येतथैवच । लुप्ताब्देविविधोत्पाते कालाशुद्धिरुदाहृतेति ॥

कालिक. । पुं । क्रोञ्चविहगे ॥ न । कालीये । कृष्णचन्दने ॥ न । वैरे ॥ प्रकृष्टोदीर्घ कालोस्य । प्रकृष्टेठञ्॥ चि । कालसम्बन्धिनि ॥ सामयिके ॥ कालेननिर्वृत्त । निर्वृत्तेऽक्षद्यूतादिभ्य इतिठञ् ॥ कालेभवोवा । कालाठञ् ॥

कालिका । स्त्री । गौर्याम् ॥ चण्डिका भेदे ॥ काश्मर्ये ॥ वृश्चिकपत्रवृक्षे ॥ क्रमदेयवस्तु मूल्ये ॥ धूसर्याम् ॥ नवमेघे ॥ पटोलशाखायाम् ॥ रोमाल्याम् ॥ मांस्याम् ॥ काक्याम् ॥ शिवायाम् ॥ मेघावलौ ॥ स्वर्णादिदोषे ॥ सुरायाम् ॥ चीरकीटे ॥ काकोल्याम् ॥ श्यामाख्यविहगे ॥ प्रतिमासीयवृद्धौ ॥ यथा । प्रतिमासंस्रवतिया वृद्धिः साकालिकामतेतिनारद ॥ कुज्झटिकायाम् ॥ हिमाचलभवायां त्रिशिरायां हरीतक्याम् । सागन्धयोगकरणे प्रशस्ता भवति ॥ कालोवर्णः समयश्चास्त्यस्या । अत इनिठनाविति ठन् ॥ स्वा० कन्वा । केण इति ह्रस्व ॥

कालिकापुराणम् । न । उपपुराणविशेषे ॥

कालिकाव्रतम् । न । अमावास्यायां स्त्री कर्त्तव्येभविष्यपुराणोक्तव्रतविशेषे ॥

कालिङ्ग । पु । भूमिकर्कारौ ॥ हस्तिनि । द्विपे ॥ सर्पे ॥ लोहविशेषे ॥ अस्यलक्षण यथा । कालिङ्गोलिङ्गवान् य स्यात घन'स्तूच्छाङ्गकोमत इति ॥ कलिङ्गानां राजनि ॥ द्रुमगधकलिङ्गस्तूरमसादृश ॥ न । कर्लींदातरवूज इतिख्यातेफलविशेषे । सुवर्त्तुले । कालिन्दके ॥ गुणा यथा । कालिङ्गं ग्राहिदृक्पित्तशुक्रघ्न' स्त्रीतल गुरु । पक्वन्तु सोष्णं सक्षारं पित्तलं कफवातजिति ॥ कालिङ्गाः पुं भूम्नि । नीवृति ॥ कलिङ्गदेशमारभ्यपश्चाष्टयोजनशिवे । दक्षिणस्यां हेशानिकालिङ्गा परिकीर्त्तिता ॥

कालिङ्गिका । स्त्री । त्रिवृति ॥

कालिङ्गी । स्त्री । राजकर्कट्याम्

कालिदास । पु । विक्रमादित्यसभाया नवरत्नमध्यगणिते प्रसिद्धकविविशेषे । मेधारुद्रे ॥ काल्या दासः । ङ्यापो संज्ञाछन्दसोर्बहुलमिति ह्रस्व ॥

कालिनी । स्त्री । आर्द्रानक्षत्रे ॥ इति हेमचन्द्र ॥

कालिन्दम् । न ।
कालिन्दकम् । न । } कर्लींदा इतिप्रसिद्धे फलविशेषे । कालिङ्गे ॥

कालिन्दी । स्त्री । यमुनायाम् ॥ कलिन्दस्येयम् । तस्येदमित्यण् । ङीप् ॥ रक्तत्रिवृति ॥

कालिन्दीभेदन । पु । कालन्दीकर्षणे । बलदेवे ॥ कालिन्द्याः भेदन' ॥

कालिन्दीसू । स्त्री । सूर्यपत्न्याम् । यमुनामातरि ॥

कालिन्दीसोदरः । पु । यमे ॥ कालि

स्या सोदर. ॥

कालिमा । पु । कार्ष्ण्ये ॥

कालिय । पु । कृष्णसर्पविशेषे ॥

काली । स्त्री । शान्तनुराजपत्न्याम् । सत्यवत्याम् ॥ कालिकायाम् ॥ कालिकामन्त्राटाग्निजिह्वान्तर्गतायां देव्याम् ॥ कीटे ॥ मातृभेदे ॥ उमायाम् ॥ काल सङ्कलनात् कालीत्याम म. ॥ कालकारस्थाया देव्याम् ॥ मध्यमेघौघे ॥ परिवादे ॥ कालाञ्जन्याम् ॥ तुवर्याम् ॥ त्रिवृति ॥ रात्रौ ॥ वृश्चिकाल्याम् । विछाटी इति गौड भाषा ॥ वह्निजिह्वाविशेषे ॥ कालोवर्णोऽस्त्यस्याः । कालाञ्जानप्रकृतपोगोत्रभाजनागकालनीलेत्यादिनाङीष् ॥

कालीकः । पुं । क्रौञ्चे ॥

कालीची । स्त्री । यमस्य विचारभूमौ ॥ इतित्रिकाण्डशेषः ॥

कालीतनयः । पुं । महिषे ॥ इतिहेमचन्द्रः ॥

कालीयम् । न । कृष्णचन्दने । हरिचन्दने ॥ कुङ्कुमे ॥ पुं । सर्पविशेषे ॥

कालीयकः । पुं । दारुहरिद्रायाम् ॥ न । गौडभाषया कालिया इति प्रसिद्धे पीतवर्णे सुगन्धिकाष्ठे । जापके । कालानुसार्ये ॥ कृष्णचन्दने ॥ कालीयकं रक्तगुणं विशेषाद्यवनाननम् ॥ कालस्यवर्णोऽस्यायम् । वृद्धाच्छः । स्वार्थे कन ॥

कालीयकचोदः । कुङ्कुमे ॥

कालुष्यम् । न । कालिम्ने ॥

कालेय. । पु । दैत्यभेदे ॥ न । कालखण्डे । यकृति ॥ गौडभाषया कालियानमपीतवर्णसुगन्धिकाष्ठे ॥ प्राच्यौ कालीयेऽग्निकलिभ्यांढक्वक्तव्य इतिढक् ॥

कालेयक. । पु । दारुहरिद्रायाम् ॥ कुक्कुरे ॥ न । कालीयके । पीतवर्णे सुगन्धिकाष्ठे ॥ कालेरयम् । सर्वत्राग्निकलिभ्यांढक् । स्वा० कन् ॥

काल्पः । पुं । कञ्चीछकडी इति प्रसिद्धे द्राविडके । कर्चूरे ॥

काल्पक । पुं । वेधमुख्ये । कर्चूरके । कल्पे ॥ कल्पविधौ भवः । तत्रभवइत्यणन्तात् कन् ॥

काल्पनिक' । त्रि । आरोपिते । कल्पिते । कल्पनाभवे ॥ कल्पनाया आगत । ठक् ॥

काल्पिक । त्रि । कल्पोवेदाङ्गम् तदुक्तविधौ ॥

काल्यम् । न । प्रत्यूषे । प्रभाते ॥ कलयति चेष्टाम् । अघन्यादयश्चेति कलेर्यक् । ततः प्रज्ञाद्यण् ॥ । क्लीबे

॥ त्रि। प्राप्तकाले ॥ कालःप्राप्तोऽस्य। कालायत् ॥

कालुक'। पु। कर्पूरे। द्राविडके॥ काले साधु'। तत्रसाधुरितियत्। स्वा० कन ॥

काल्यमान। त्रि। विचाल्यमाने ॥

काल्या। स्त्री। उपसर्यायाम्। गर्भग्रहणप्राप्तकालायाङ्गवि ॥ काल'प्राप्तोऽस्य'। तद्ग्रप्राप्तमिति वर्त्तमाने कालाद् यत् ॥

कावचिकम्। न। तनुत्रिवाङ्गके ॥ कवचिनासमूहः। ठञ्कवचिनश्च॥

कावाद:। पु। वाक्कलहे॥ ईषद्वाद ईषदर्थेचेतिको कादेश.॥

कावारम्। न। शैवले॥ आसमन्तात् वार्यते आच्छाद्यतेऽनेन। हलश्चुरादेः पुसीतिघ.। यद्वाआवारयति व्रियते वा। हल्०। अच। घञ्वा। कस्यजलस्य आवारम् ॥

कावारी। स्त्री। छत्रादिच्छत्रके। अमलछ्याम्। वारित्रायम् ॥ छत्ताइति भाषा ॥

कावृक। पु। कुक्कुटे॥ चक्रवाके॥ पीतमुण्डखगे ॥

कावेरम्। न। कुङ्कुमे ॥

कावेरी। स्त्री। वेश्यायाम्॥ हरिद्रायाम् ॥ सरिद्विशेषे ॥ कस्य जलस्य वेर शरीम्। तस्येयम्। तस्याद्दमिच्छया। ङीप ॥ ईषद्वेरमस्या वा ॥

काव्य:। पु। शुक्रे। दैत्यगुरौ॥ न। ग्रन्थे। कविकृतौ॥ अदोषौ सगुणौ सालङ्कारौशब्दार्थौ काव्यमितिवामन,॥ तत्त्रिविधं यथा। सव्यङ्ग्यमुत्तम काव्य मव्यङ्ग्यमधमं स्मृतम्। किञ्चिद्व्यङ्ग्यसमायुक्तं मध्यम परिकीर्त्तितमितिकाव्य चन्द्रिका॥ कवेरपत्यम्। कुर्वादिभ्योण्य.॥ कवेरिदं कर्मभावो वा। ष्या०। ष्यञ्॥ कुधातो.ओरावश्यके इति ण्यद्वा ॥

काव्यचौर। पु। चन्द्ररेखा ॥

काव्यलिङ्गम्। न। अर्थालङ्कारप्रभेदे ॥ अस्यलक्षणं यथा। हेतोर्वाक्य पदार्थत्वे काव्यलिङ्गमुदाहृतमिति ॥ काव्यलिङ्ग हेतोर्वाक्यपदार्थतेतिच ॥ यथा। वपु प्रादुर्भावा दनुमित मिद जन्मनि पुरा पुरारे न प्राय. क्वचिदपि भवन्तं प्रणतवान्। नमन्मुक्त सम्प्रत्यऽह मतनु रग्रेप्यनति भाग् महेश क्षन्तव्यं त दिदमपराधद्वयमपि ॥ अनेक पदार्थता यथा। प्रस यिसखीसखीजनपरिहासरसाधिगतै र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्। वपुषि वधाय तत्र तव शस्त्र मुपक्षिपतः प

तत् शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ एक पदार्थता यथा । भव्यो दुग्धनन्दनस्तु भवते दशास्यमाले शुभं वा सोपानपरम्पराञ्च गिरिशताकान्ताश्रयालङ्कृतिम् । सद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखालोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥ एषु च पराधद्वये पूर्वापरजन्मनोरन्वयम् भुजपाते मोक्षोपक्षेपो महामोहे-सुखालोकोच्छेदित्वञ्च यथाक्रम-मुक्तरूपो हेतुः ॥

काव्या । स्त्री । पूतनायाम् ॥ बुद्धौ ॥

काव्यार्थापत्तिः । स्त्री । अर्थालङ्कारप्रभेदे ॥ कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते । स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम् ॥ अत्र त्वन्मुखेन पद्मानि येन जितानि इति विवक्षितम् । तथाच सोऽपि येन जितः तेन पद्मानि जितानीति किमु वक्तव्यमिति दण्डापूपिकान्यायेन पद्मजयरूपस्यार्थस्य संसिद्धिः काव्यार्थापत्तिः ॥ तान्त्रिकार्थापत्तिव्यावर्त्तनाय काव्यविशेषणम् । यथा वा । अधरोऽयमधीराक्ष्या बन्धुजीवप्रभाहरः । अन्यजीवप्रभां हन्त हरतीति किमद्भुतम् ॥ स्वकीयहृदयं

भित्त्वा निर्गतौ यौ पयोधरौ । हृदयस्यान्यदीयस्य भेदने का कृपा तयोः ॥

काशः । पुं । रोगविशेषे ॥ क्षुते ॥ पु । काष्ठकण्डूयने ॥ काँस इति प्रसिद्धे तृणविशेषे । इक्षुगन्धायाम् ॥ काशः क्षाम्यमधुरस्तिक्तः स्वादुपाकोहिमः सरः । मूत्रकृच्छ्राश्मदाहास्रक्षयपित्तजरोगजित् ॥ न । काशपुष्पे ॥ काशते । काशृ दीप्तौ । पचाद्यच् ॥

काशक । पु । काशे । काँस इतिभाषा ॥

काशाल्मलि । स्त्री । कूटशाल्मलिवृक्षे ॥

काशिः । स्त्री । देशविशेषे । काश्याम् ॥ काशते । काशृ० । सर्वधातुभ्य इन् ॥

काशिका । स्त्री । काश्याम् । सप्तार्थप्रकाशने ॥ प्रकाशिकायाम् ॥ काश्येव । । स्वार्थे कन ॥ काशिक्याम् । । काश्यादिभ्यष्ठञ्ञिठ.। इकारउच्चारणार्थं ॥

काशिकाप्रिय । पुं । दिवोदासे । धन्वन्तरौ ॥

काशिकी । स्त्री । काश्याञ्जातायाम् ॥ काश्यांजाता तत्रभवा तत आगता इति वा । काश्यादिभ्यष्ठञ्ञिठाविति ठञ् । ङीप् ॥

काशिराजः । पुं । नृपतिविशेष । धन्व

न्तरौ । सुधोद्भवे ॥ काश्या राजा । राजाह. सखिभ्यष्टच् ॥

काशी । स्त्री । वाराणस्याम् । तप स्थ ल्याम् । अविमुक्ते । आनन्दवने ॥ मुने प्रलयकालेऽपि न तत् क्षेत्र कदाचन । विमुक्त न शिवाभ्यां यद विमुक्तं ततोविदु ॥ न यदाभूमिवलय न यदापां समुद्भव. । तदा विहर्तुं मीशेन क्षेत्र मेत द्विनिर्मितम् ॥ इत्यगस्त्यम्प्रतिस्कन्दवचनम् ॥ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरीद्वारावती चैव सप्तैता मोक्षदायिका ॥ एतास्तु पृथवीमध्ये न गण्यन्ते कदाचन । पुरीद्वारावतीविष्णो पाञ्चजन्यो परिस्थिता ॥ एताश्च मुक्तिदा सर्वा एकचगणिता.सुरै । यानि यानिच क्षेत्राणि काशीप्राप्तिकराणिषट॥प्राणिना मिह मोक्षार्थं महाकारुणिक. शिव.। तारोपदेशं कुरुते इत्याहु शास्त्रकोविदा । यथोक्तरुद्रयामले । काशोपुरीपरिसरे सुरसिन्धुतीरे कर्णे जपत्यनुदिनकिल देहभाजाम् । मोक्षार्थमेव दयया शशिखण्डमौलि श्रीशक्तिबीजमनघ सुरसंघसेव्यमिति ॥ तत्र वैष्णवेभ्योराममन्त्रस्यशैवेभ्य:पञ्चाक्षरस्य बृहज्जाबालोक्त्या शाक्तेभ्य शक्तिबीजस्यभुवनेश्वरीमन्त्रस्य यतिभ्य प्रणवस्येतिव्यवस्था ॥ सदा कृतयुगञ्चास्तु सदा चास्तू त्तरायणम् । सदा म- होदयश्चास्तु काश्यां निवसता सताम् ॥ लोलार्ककेशवौ कोटी गङ्गाज्या नगरधनु । कलि लक्ष्य शरो धर्म्म शिवो धन्वी पुनातु माम् ॥ अथवा सर्वक्षेत्राणि काश्या सन्ति नगोत्तम । तत्र नित्यं वसेन नित्यं देवीभक्तिपरायण. ॥ तानि स्थानानि सम्पश्यन जपन् देवीं निरन्तरम् । ध्याय स्तच्चरणाम्भोजं मुक्तोभवति बन्धनादितिदेवीगीता देवीभागवते ॥ काशते । काशृदीप्तौ । पचाद्यच । गौरादित्वान् ङीष् ॥

काशीनाथ. । पु । विश्वेश्वरे । शिवे ॥

काशीराज । पु । शिवे ॥ धन्वन्तरौ ॥ काश्या राजा । टच ॥

काशीशम् । न । धातुकाशीशे । हीराकसीति प्र० उपधातुविशेषे ॥ तद्द्विविधम् । हरिद्वर्ण लोहितञ्च धातुकाशीशमिष्यते । शुक्लवर्ण तथाकृष्णम्पुष्पकाशीशमुच्यते ॥

काशूकार । पु । गुवाके ॥

काश्मरी । स्त्री । गम्भार्याम् ॥ काशते । काशृ० । अन्येभ्योपीतिमनिन् । व

नोरचेति क्षीमे ॥

काश्मर्य्य । पु । काश्मरीवृक्षे । गम्भा-र्याम् ॥ काश्मरीशब्दोस्यक्ष । अन्ये ष्वोपीतियप् ॥

काश्मीरम् । न । पुष्करमूले ॥ कुङ्कुमे ॥ टङ्के ॥ पुभूम्नि । देशविशेषे । शास्त्रश्रियषु ॥ संप्रदायविशेषे ॥ यथा । शारदामठमारभ्य कुङ्कुमाद्रितटान्तकम् । तावत्काश्मीरदेशः स्यात पञ्चाशद्योजनात्मकः ॥ काश्मीरेषुभवम् । तत्रभवइत्यर्थे कच्छादिभ्य श्चेत्यण ॥ स्वार्थेवा ॥

काश्मीरजम् । न । कुष्ठे । पारिभाव्ये ॥ कुङ्कुमे ॥ पुष्करमूले ॥ काश्मीरे जायते । जनी० । सप्तम्यांजनेर्डः ॥

काश्मीरजन्म । न । कुङ्कुमे ॥ कुष्ठे । पारिभाव्ये ॥ काश्मीरे जन्मास्य ॥

काश्मीरजा । स्त्री । अतिविषायाम् । महौषधे ॥

काश्मीरा । स्त्री । अतिविषायाम् ॥ कपिलद्राक्षायाम् ॥ पृथिव्याम् ॥

काश्मीरी । स्त्री । गम्भार्याम् ॥ गुणायथा । काश्मीरीतुवरातिक्तावीर्योष्णामधुरागुरुः । दीपनी पाचनी मेध्याभेदिनीभ्रमशोषजित् ॥ दोषतृष्णामशूलार्शोविषदाहज्वरापहा । तत्फलंवृंहणंवृष्यंगुरुकेश्यंरसा



यनम् । वातपित्ततृषारक्तक्षयमूत्रविबन्धकृत् ॥ स्वादुपाकेहिमंस्निग्धं तुवराम्लंविशुद्धिकृत । हन्याद्दाहतृषावातरक्तपित्तक्षतक्षयानिति ॥

काश्य । पु । काशिराजे ॥ न । मद्ये ॥

काश्यप । पु । मुनिविशेषे ॥ कणादमुनौ ॥ मृगविशेषे० ॥ मीनवि० ॥ गोत्रवि० ॥ ततप्रवरान्तर्गतमुनिवि० ॥ कश्यपस्यात्मजमापे ॥ कश्यपस्यगोत्रापत्यम् । विदायञ् ॥ न । मांसे ॥ इतिहेमचन्द्रः ॥

काश्यपि । पुं । अरुणे । गरुडाग्रजे ॥ गरुडे ॥ कश्यपस्यापत्यम् । बा० इञ् ॥

काश्यपी । स्त्री । पृथिव्याम् । भूमौ ॥ कश्यपस्येयम् । तस्येदमित्यण् । ङीप् ॥ अम्बिकायाम् ॥

काश्यपेय । पुं । सूर्य्ये ॥

काश्मरी । स्त्री । काश्मर्याम् । गम्भार्याम् ॥ काशते । काशृ० । अन्येभ्योपीतिवनिप् । वनोरचेतिङीप्ौ ॥

काष । पुं । कषणे ॥ कषणपाषाणे ॥ कष्यतेऽनेन । कष० । घञ् ॥

काषायम् । त्रि । कषायेणरक्तेवस्त्रादौ ॥ तेनरक्तंरागादित्यण् ॥

काषायी । त्रि । कषायरक्तवस्त्रवति ॥

काष्ठम् । न । दारुणि । इन्धने ॥ अर्जुनिक्षास मार्थेकाष्ठे ॥ यथा । सता

रमति शुष्कं यत मुष्टिमध्येसमेष्य ति। तत्काष्ठङ्काष्ठमित्याहु खदिरादिसमुद्भवम्॥ काशते। काशृ०। हनिकुषीत्यादिना क्थन। शश्चेति पत्वम्। तितुत्रेतिनेट॥

काष्ठकम्। न। अगुरुणि॥

काष्ठकदली। स्त्री। वनकदल्याम्। शिलारम्भायाम्। काठकेला इतिभाषा॥

काष्ठकीटः। पु। घुणे॥

काष्ठकुट्ट। पु। शतच्छदखगे। खुटकबढैया इति भाषा॥

काष्ठकुद्दालः। पुं। अभ्याम्। नौकादेर्मलापनयनार्थंकाष्ठघटितकुद्दाले॥ कमुद्दालयति। दलविदारणे। कर्मण्यण। शकन्ध्वादि। काष्ठस्य कुद्दाल.॥

काष्ठजम्बू। स्त्री। भूमिजम्ब्वाम्॥

कष्ठातट्। पु। वर्णसङ्करजातिविशेषे। रथकारे। वर्द्धकौ। बढइ इति भाषा॥ काष्ठं तक्षति। तक्षूतनूकरणे क्विप। काष्ठतक्षौ। काष्ठतड्भ्यामित्यादिरूपाणि॥

काष्ठतक्षक.। पुं। रथकारे। तक्षणि॥ काष्ठंतक्षति। तक्षू०। ख्वुल्॥

काष्ठतन्तु। पु। कोषकारे। काष्ठकृमौ॥

काष्ठदारु.। पु। देवकाष्ठे॥

काष्ठद्रु'। पुं। पलाशवृक्षे॥

काष्ठधात्रीफलम्। न। आमलके॥

काष्ठपाटला। स्त्री। सितपाटलिकायाम्॥

काष्ठमठी। स्त्री। चितायाम्॥ इति त्रिकाण्डशेष'॥

काष्ठमल्ल। पु। शवयाने। अर्थी इति भाषा॥

काष्ठमौनम्। न। इङ्गितेनापिस्वाभिप्रायाऽप्रकाशने॥

काष्ठलेखक। पु। घुण॥

काष्ठलोही। पु। काष्ठलोहवन्मुद्गरे। वातर्दौ॥

काष्ठवल्लिका। स्त्री। कटुकायाम्॥

काष्ठशारिवा। स्त्री। शारिवायाम्। अनन्तमूल इतिगौडभाषा॥

काष्ठा। स्त्री। दारुहरिद्रायाम्॥ स्थितौ। स्थानमात्रे॥ दिशि। आशायाम्॥ उत्कर्षे। प्रकर्षे॥ मर्यादायाम्। सीमनि॥ निष्ठायाम्॥ पर्यवसानभूमौ॥ अष्टादशनिमेषात्मके काले॥ दशक्षणपरिमितेकाले॥ काशते। काशृ०। हनिकुषिनीरमिकाशिभ्य' क्थन्। शश्चेतिपत्वम्। टाप्॥

काष्ठाम्बुवाहिनी। स्त्री। द्रोण्याम्। काष्ठादिकृतच्छिन्नाग्रनौकाकृतिजलसेचन्याम्॥ पुन' पुनरम्बुवहति। व

कुलमाभोभयसतिबिभिः । काष्ठस्थ भस्मवाचिनी । काष्ठेस्युपचयवशाम् । विभामध्या भपिद्रोगीस्यात् ॥

काष्ठालुकम् । न । काठिन्ययुक्तो कन्दविशेषे ॥

काष्ठील' । पु । राजार्कं ॥

काष्ठीला । स्त्री । कदम्बाम् ॥ काष्ठिना ग्रह्यते । ग्रहस्यप्रक्षेपणयो' । घञ् ॥ कार्षपत् भष्ठीवमस्यावा ॥

काष्ठोदुम्बरिका । स्त्री । काकोदुम्बरिकायाम् ॥

कासः । पु । खाँसीति प्रसिद्धे रोगे । चवयौ ॥ पञ्चकासा स्मृतावातपित्तश्लेष्मक्षतक्षयैः । क्षयायोपेक्षिताः सर्वेबलिनश्चयथोत्तरम् ॥ कासते अनेन । कासृशब्दकुत्सनयोः । करणेतिघञ् ॥

कासकन्दः । पु । कोकयादेश प्रसिद्धे । कासालोर । विशाखपर्णे ॥

कासघ्नः । पुं । मोदकविशेषे ॥ यथा । हरीतकीकणाशुण्ठीमरिचंगुडसयुतम् । कासघ्नोमोदकः प्रोक्तस्तृष्णा रोचकनाशनइति ॥

कासघ्नी । स्त्री । कण्टकार्याम् ॥

कासजित् । स्त्री । भार्ग्याम् ॥

कासनाशिनी । स्त्री । कर्कटशृङ्ग्याम् ॥

कासन्दीवटिका । स्त्री । वेसवारविशेषे ॥

कासमर्दः । पु । कासकामुन्दा इतिगौडभाषाप्रसिद्धे गुल्मप्रभेदे । अरिमर्दे । जरणे ॥ पु । न । कासुन्दी इतिगौडभाषाप्रसिद्धे वेसवारे ॥ पेषितकजिम्बिलवणगञ्जितवेसवार इतिमाधरावेन्द्र: ॥

कासमर्दकम् । न । कसौंदी इतिख्यातशाके ॥ कासमर्दकपत्रंस्यात् कासविषाग्निमुत् । मधुरंकफवात संपाचनंकण्ठशोधनम् ॥ विशेषतः कासहरं पित्तघ्नंग्राहकंलघु ॥

कासमर्दन' । पुं । पटोले ॥

कासरः । पु । महिषे ॥ केजले सरति स्वगतौ । अच् ॥ यद्वा ॥ कुईषत् सरति । स्थूलकायत्वात् । ईषदर्थे कोः कादेशः ॥

कासरा । पुं । शाकविशेषे ॥ यथा । कटुकारीकृतः शाकः सकृष्याः सर्वेकासरेति ॥

कासारः । पुं । सरोवरे । सपद्मे निष्पन्ने वा जलाशयाश्रये ॥ कृशिलेपप्रकारे ॥ कासते । काशृशब्दे । तुषारादयश्चेत्यारन् ॥ यद्वा ॥ कुईषत् सारोयस्य । ईषदर्थेचेति कोः कादेशः । अर्श आद्यच् ॥ यद्वा । केजलेऽ

नसार । अन्येषामपीति दीर्घे । आड प्रश्लेषोवा ॥ कासरूच्छति । रूगतौ । कर्मण्यण वा ॥

कासारम् । न । कसार इतिख्याते प क्वान्नविशेषे ॥ तत् प्रकारो यथा । घृतेतप्ते विनि क्षिप्य कनिक्या माच येन्मनाक । ततस्तत्रविनि क्षिप्य ख ण्डभागसम पचेत् ॥ ततश्चाकृष्यत त पाने क्षिप्त्वा सम्यक् सुपिक्कयो । च तुरस्त्रीकृतंश्चैतत् भवेत् कासार सञ्ज्ञकम् ॥ कासारं रुचिद् श्रेष्ठनाति रूक्षनपिच्छिलम् । हृल्लासकफपित्त घ्नं विरुचौरुच्चिकारकम् ॥ प्रक्षिप्य माषशृङ्गाटकशेरूणा पृथक पृथक । शालूकस्यचकर्त्तव्य कासार खण्डस र्पिषा ॥

कासारि । पु । कासमर्दे ॥ आलूके॥

कासालु । पु । कोकणादेशप्रसिद्धे आ लुविशेषे । कासकन्दे ॥

कासीसम् । न । हीराकसी इतिगौड भाषा प्रसिद्धे उपधातु विशेषे । भस्म वन्मृत्तिकाख्याकासीसमितिपरीचि ते धातुकासीसे । खेचरे । धातुशेख रे ॥ कासीस धातुकासीस पांशुका सीसमित्यपि । तदेवकिञ्चित्पीत स्तुपुष्प कासीसमुच्यते ॥ कासीस म्ल मुष्णञ्च तिक्तञ्च तुवर स्तथा । वातश्लेष्महर केश्य नेत्र्य कण्डूविषप्र णुत । मूत्र कृच्छ्राश्मरीश्वित्र नाशनप रिकीर्त्तितम् ॥

काहू । स्त्री । विकलवाचि ॥ शक्रास्त्रे ॥ वृद्धौ ॥ कजि ॥ कसति । कसग तौ । शितकसिपद्यर्त्तेरिच्छू ॥

काहूतरी । स्त्री । शक्राख्ये आयुधे ॥ ह्रस्वाकाहू । काहूगोणीभ्यांष्टरच । ङीष् ॥

काहका । स्त्री । काहलावाद्ये ॥

काहल । पु । कुक्कुटे ॥ शब्दमात्रे ॥ दु ष्टवक्तावाम् । महानादे ॥ बिडाले ॥ न । अव्यक्तवाक्ये ॥ त्रि । शुष्के ॥ भृशे ॥ खले ॥

काहला । स्त्री । वाद्यभाण्डविशेषे । काहली इति हिमगिरौप्रसिद्धा या ध्वनिनालायाम् ॥ अप्सरसांप्रभे दे ॥

काहलापुष्प । पु । धुस्तूरे ॥ काहले वपुष्पास्यस्य ॥

काहली । स्त्री । तरुण्याम् । दिक्कर्य्याम्॥

काहारक । पु । कहार इति प्रसिद्धे शिबिकावाहकजातिविशेषे ॥ यथा । तथा गारुडिका वीरा. चुरकर्मोप जीविका. । व्याधा काहारका पुष्टाः कृष्ण संवाहयन्ति ये इति जैमिनि भारते आश्वमेधिके पर्वणि १० अध्या

य ॥

किंवदन्ति । स्त्री । जनश्रुतौ ॥ कोपि वाद । किम्पूर्वाद्वदे र्भुवोश्मिच । बाहुलकाद्वदेरपि । ततोङीषवि कल्प ॥

किंवदन्ती । स्त्री । जनश्रुत्याम् । स त्ये असत्येवा लोकवादे ॥ कोपिवा द । किम्पूर्वाद्वदे र्भूर्वाश्वसीति बाहुलकाज्भाच् । श्रोन्त' । गौ० ङीष् ॥

किंवा । अ । विकल्पे । अथवा ॥

किंशारु । पुं । सस्यशूके । धान्याग्रभागे ॥ बाणे ॥ कङ्कपक्षिणि ॥ किञ्चित कु त्सितंवा । शृणाति । शृहिंसायाम् । किञ्शयोः श्रिण इतिञुण् ॥

किंशुक । पुं । पलाशवृक्षे ॥ नन्दीवृक्षे ॥ किञ्चित शुकइव । शुकतुण्डाभपु ष्पत्व त ॥

किंशुलुक । पुं । पलाशदृक्षविशेषे ॥

किंसखा । पुं । कुत्सिते सखौ । दुर्मौ त्रिणि ॥ कुत्सित न सखा । किम. क्षेपइ सम।स.न्तप्रतिषेध' ॥

किकि । पुं । किकिदिवे । चाषे ॥ ना रिकेले ॥

किकिदिव । पुं । } चाषखगे ॥
किकिदिवि. । पुं । }

किकिदीव. । पुं । चाषविहगे ॥ नीलक ण्ठे ॥

किकिदीवि । पु । नीलचड इति गौड भाषाप्रसिद्धे स्वर्णचातके । चाष पतत्रिणि ॥ बाहुलकाद्ह्रस्वदीर्घ योर्विनिमय ॥

किकीदिव । पु । किकिदिवो ॥ कि किदीविकिकीदिवाविति द्विरूपको षादकाराम्तोपि ॥

किकीदिवि । पु । चाषे ॥ किकीति दिव्यति वासते । दिवुक्रीडादौ । कु विधृक्षिविस्त्वविस्त्रवि किकीदिविरि तिसाधु ॥

किकीदीव' । पुं । } चाषपक्षिणि ॥
किकीदीवि । पु । }

किखि । पुं । वानरे । कपौ ॥ स्त्री । फे रौ । लघुशृगाले । लोमशी इति भाषा ॥

किङ्कर । त्रि । दासे । सेवके ॥ विप्रस्यकि ङ्करोभूपोवैश्यो भूपस्यभूमिप । सर्वे षाकिङ्कराश' शूद्रा ब्राह्मणस्यविशेष त' ॥ किञ्चित् कुत्सितंवाकरोति । दिवाविभेत्यत्रकियत्तद्बहुष्विस्यच ॥

किङ्करा । स्त्री । दास्याम् ॥ अजाद्यात् टाप ॥

किङ्करी । स्त्री । दास्याम् ॥ किङ्करस्य ॥ स्त्री । पुंयोगाद्दाख्यायामितिङी ष् ॥

**किङ्किणी** । स्त्री । क्षुद्रघण्टिकायाम् । घाघर इति गौडभाषा प्रसिद्धे कट्याभरण विशेषे । करधनी कौंधनी इति भाषा ॥ किञ्चित् किणाङ् करोति । किणशब्दात् तत् करोतीति णयन्तात् अच । गौ० ङीष् ॥ विकङ्कतद्रुमे ॥

**किङ्किणीका** । स्त्री । क्षुद्रघण्टिकायाम् ॥ चङ्कणने । कणशब्दे । अस्मात् यङ्लुगन्तात् चङ्किण किङ्किणचेत्यूचन । धातो किङ्कणादेशश्च ॥

**किङ्कि** । पु । कोकिले । भ्रमरे ॥ हये ॥ कामदेवे ॥ न । गजकुम्भे ॥

**किङ्किरा** । स्त्री । क्षतजे । रुधिरे ॥

**किङ्किरात** । पु । अशोकद्रुमे ॥ कामदेवे ॥ रक्तम्लाने ॥ शुके ॥ पिके ॥ पुष्पविशेषे ॥ हेमगौरे । पीताम्लाने ॥ अस्य गुणा । किङ्किरातो हिमस्तिक्तः कषायश्च हरेद्रक्षः । कफपित्तपिपासास्त्रदाहशोषवमिक्रिमीनिति ॥

**किङ्किराल** । पुं । वर्वुरवृक्षे ॥

**किङ्किरी** । पु । विकङ्कते । स्रुवावृक्षे । बुइंचि इतिगौडभाषा ॥

**किञ्च** । अ । आरम्भे ॥ साकल्ये ॥ सम्भावनायाम् ॥ किम् च चेति विग्रह ॥

**किञ्चन** । अ । अकात्स्न्ये । असाकल्ये । कल्पे ॥

**किञ्चन** । पु । हस्तिकर्णपलाशे ॥

**किञ्चित** । अ । स्वल्पे । ईषत् । मनाक् ॥ इदन्तयानिर्देष्टुमशक्ये ॥ किञ्चिच्च अनयो. समाहार ॥

**किञ्चिलिक** । पुं । / **किञ्चुलिका** । स्त्री । } किञ्चुलुके ॥

**किञ्चुलुक** । पु । केचुआख्ये कीटविशेषे । गण्डूपदे ॥ किञ्चिद्लुम्पति । कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमितिवार्त्तिकनिर्दिष्टश्चुलुम्पधातु. । अन्येभ्योपीतिड । टेरिति डकार लकारपकाराणां लोप । तत. स्वार्थे कन् ॥

**किञ्जम्** । न । / **किञ्जल** । पु । } किञ्जल्के ॥

**किञ्जल्क** । पु । केसरे । पुष्परेणौ ॥ किञ्जल्क शीतलो रूक्ष कषायो ग्राहकोपिसः । कफपित्ततृषादाहरक्तार्शोविषशोथजित् ॥ पद्मकिञ्जल्क इतिशेष. ॥ किञ्चिज्जलति । जलअपवारणे । बाहुलकात्क ॥ न । नागकेशरपुष्पे ॥ पद्माभ्यन्तरस्थे केशाकारे कण्टकवेष्टने केसर इतिख्याते । पीतपरागे ॥

**किञ्जल्कविभेद** । पु । केसरापगमे ॥

म्भावितानाम् । इति प्राचीनाः ॥

किन्तुघ्न । पुं । ववाद्येकादशकरणान्तर्गतशेषकरणे ॥ तत्रजातस्यफलम् । मित्रामित्रे नैवकिञ्चिद्विशेषो धर्माधर्मे तुल्यता मानवस्य । लोके वादे सर्वदाप्रीतियुक्तः किन्तुघ्नाख्येयस्यनूनं जनि स्यादितिकोष्ठीप्रदीप ॥

किन्दी । पुं । } घोटके । अश्वे ॥ ना
किन्धी । पुं । } त्वावेतौ ॥

किन्नर । पुं । किम्पुरुषे । मयौ । अश्वमुखदेवयोनिनरविग्रहे देवगायने ॥ किञ्चिन्नरः अश्वमुखत्वात् । कुत्सितोवा नरः किन्नरः । किंक्षेप इति समासः । कुत्साच कस्यचिन्नरमुखाश्वकायत्वात् कस्यचिदश्वमुखनरशरीरत्वात् ॥ अर्हदुपासकविशेषे इति हेमचन्द्रः ॥

किन्नरेश । पुं । वैश्रवणे । कुबेरे ॥ किन्नराणामीशः ॥

किन्नरेश्वर । पुं । कुबेरे । नरवाहने ॥

किन्नु । अ । प्रश्ने ॥ वितर्के ॥ स्थाने ॥

किम् । अ । कुत्सायाम् । गर्हणे ॥ वितर्के ॥ निषेधे । प्रश्ने । प्रकारे । कूयते कायते । शब्दे । बाहुलकात् डिम् । कायतेर्डिमिर्वा ॥ ईषदर्थे ॥ अतिशये ॥

कं । त्रि । क्षेपे ॥ वितर्के ॥ निन्दायाम् ॥ परिप्रश्ने ॥ कायनम् कायविवा । कै शब्दे । कायतेर्डिमि. ॥ स्त्री । का । न । किम् ॥

किमिच्छक । पुं । मार्कण्डेयपुराणोक्ते व्रतविशेषे ॥

किमु । अ । सम्भावनायाम् ॥ विमर्शे ॥ किम् च उच ॥

किमुत । अ । किमुतार्थे ॥

किमुत । अ । प्रश्ने ॥ वितर्के ॥ विकल्पे अतिशये ॥ किञ्च तदुत च । समाहारो वा ॥

किमूत । अ । वितर्के ॥ किम् च ऊतच अनयो समाहार ॥

किम्पच । त्रि । किम्पचाने ॥ किम्पचति । पचाद्यच । किंक्षेप इतिसमास ॥

किम्पचान. । त्रि । कृपणे ॥ किञ्चित् पचति । शौणादिकआनजितिस्वामी ॥ किम्पचति । ताच्छील्येति चानशानच्वा । अनित्यमागमशासनमितिनमुक । किंक्षेपइतिसमास ॥

किम्पाक । पुं । माकाल इतिगौडभाषाप्रसिद्धमहाकाललतायाम् ॥ तत्फले ॥ त्रि । अज्ञे ॥ मातृघासिने ॥

किम्पुरुष । पुं । किन्नरे ॥ किञ्चित् कुत्सितो वा पुरुष । किंक्षेपइतिसमा

ऽन्योनैपात्त सोऽऽईतिकोन्वरात्तक. ॥ किरातएव । स्वार्थेक. ॥

किराततिक्त । पु । चिरायता इतिप्र सिद्धे वृक्षे । भूनिम्बे । अनार्यतिक्ते ॥ किरातदेशे अस्ति जन्मस्थान म स्य । अर्शआद्यच । किरातस्यावैाति क्तश्च ॥

किराताशी । पु । गरुडे ॥

किराति । स्त्री । गङ्गायाम् ॥ इतिज टाधर ॥

किरातिनी । स्त्री । जटामांस्याम् ॥

किराती । स्त्री । दुर्गायाम् ॥ गङ्गाया म् ॥ कुट्टन्याम् ॥ चामरधारि ण्याम् ॥

किरि. । पु । भूदारे । शूकरे ॥ किर ति । कृविक्षेपे । कृगॄशॄपृकुटिभिदि च्छिदिभ्यश्चेति इप्रत्यय ॥ इकुकृ ष्यादिभ्य इति भावे इग्वा ॥

किरिटि । न । तिन्ताखफले ॥

किरीट । पु । न । मुकुटे ॥ किरति कीर्य्यतेऽनेनवा । कृ० । कृतृकृ चिभ्य. कीटन । शिरोवेष्टने ॥

किरीटी । पु । अर्जुनपाण्डवे ॥ त्रि । किरीटवति ॥ किरीटोऽस्यास्ति । इ नि: ॥

किरीटमाली । पु । अर्जुने ॥

किर्म्मी । स्त्री । पलाशे ॥ शालायाम् ॥



हेमपुत्र्याम् । स्वर्णपुत्तलिकायाम् ॥ लोहपुत्तलिकायाम् ॥

किर्म्मीर. । पु । नागरङ्गवृक्षे ॥ राक्षस विशेषे ॥ कर्बुरे ॥ त्रि । कर्बुरवर्णव ति ॥ कीर्य्यते । कृविक्षेपे । बाहुल काल कृशृपृकटिपटिशौटिभ्यईरन्नि तिईरन्न मुडागमश्च ॥

किर्म्मीरजित् । पु । भीमसेने ॥

किर्म्मीरत्वक् । स्त्री । नारङ्गवृक्षे ॥

किर्म्मीरभित । पु । भीमसेने ॥ कि र्म्मीरम् भिनत्ति । भिदिर० । क्वि प ॥

किर्म्मीरसूदन । पु । भीमसेने ॥ कि र्म्मीर सूदयति सूदितवान वा । सूदक्षरणे । नन्द्यादित्वात् ल्यु ॥

किल । अ । वार्त्तायाम् ॥ सम्भाव्ये ॥ अनुशयार्थे ॥ निश्चये ॥ प्रसिद्धाप्र माणद्योतके ॥ सत्ये ॥ हेतौ ॥ अरुचौ ॥ अलीके ॥ न्यक्करणे ॥ किलति । किलश्वैत्ये । इगुपधेतिक. ॥

किलकिञ्चितम् । न । स्त्रीणाविला- सविशेषे । इष्टजनदर्शनहर्षवशात शुष्करुदितहसितत्रसितक्रोधश्रमा- भिलाषाना सङ्करकरणरूपे भावे । शृङ्गारभावजायाक्रियायाम् ॥ तल्लक्ष णं यथा । हर्षाद्रुदितगीतादिव्यामि श्रकिलकिञ्चितमिति ॥ क्रोधाश्रुह

मरम् ॥

किशल: । पु । न । पल्लवे ॥

किशलय । पुं । न । पल्लवे ॥ किञ्चित् शलति । शलचलने । वा॰ कयन् । पृ॰ ॥

किशोर । पु । अश्वशिशौ ॥ तैलपर्णौ षधौ ॥ सूर्ये ॥ तरुणावस्थे । दशवर्षोर्द्धं आपञ्चदशवर्षके ॥ यथा । किञ्चिच्छूर. किशोर.स्यात्ततो हि दशमात् परम् । शूरत्वं दृश्यते किञ्चिद्नुदर्द्धं दिने दिने इति ॥ त्रि । कैशोरावस्थायुक्ते ॥ कशति । कशशब्दे किञ्चित् शवतिवा शुगतौ शवगतौवा किञ्चित् शृणातिवा । शृहिंसायाम् । किशोरादयश्चेति साधु ॥

किशोरी । स्त्री । किशोरावस्था युक्तायाम् ॥ तरुण्याम् ॥ किशोरात् वयसिप्रथम इतिङीप ॥

किष्कन्द । पु । ओड्रदेशस्थशैलविशेषे ॥ स्त्री । तत्रस्थगुहायाम् ॥

किष्किन्धा । स्त्री । गन्धमादनगुहायाम् ॥ पुरीविशेषे ॥ सापूर्वं वालिवानरस्य राजधान्यासीत् । श्रीरामो वालिनं हत्वा तां सुग्रीवायदत्तवान् ॥ किङ्किन्दधाति । डुधाञ॰ । आत इति क । पारस्करादित्वात् पूर्वस्य किमो मलोप सुट् षत्वञ्च नि

पात्यते ॥

किष्कन्धाधिप । पु । वालिवानरे ॥

किष्कु । पु । स्त्री । वितस्तौ । द्वादशाङ्गुलपरिमाणे ॥ प्रकोष्ठे । कफोणेरधोमणिबन्धपर्यन्ते ॥ करे । हस्ते ॥ चतुर्विंशत्यङ्गुलेमाने ॥ त्रि । कुत्सिते ॥ कायते ऽनेन । कैशब्दे । मृगय्वादित्वात् कु । पारस्करादित्वात् साधु ॥

किष्कुपर्वा । पु । वृक्षौ ॥ वंशे ॥ पोटगले ॥

किसरम् । न । सुगन्धिद्रव्यविशेषे ॥

किसरिक । त्रि । वणिग्विशेषे । किसरवणिजि ॥ किसरपण्यमस्य । किसरादिभ्य ष्ठन । षित्वात् ङीष् । किसरिकी ॥

किसलय । पु । न । पल्लवे । नवीनपत्रे ॥ नवपत्रादियुक्तशाखाग्रपर्वणि नवपत्रस्तवके ॥ किञ्चित्सलति । षलगतौ । वा॰ कयन् । पृ॰ ॥

की । अ । कुत्सायाम् ॥

कीकट । पु । अश्वे । घोटके ॥ कीकटा । गयाप्रदेशे ॥ यथा । चरणाद्रि समारभ्य गृध्रकूटान्तकं शिवे । तावत्कीकटदेश.स्यात् तदन्तर्मागधोभवेत् ॥ पश्यमगधम् । विहारनाम्ना प्रसिद्धे देशे इति केचित् ॥ त्रि । कृपणे ॥ निर्धने । निःस्वे ॥

कीकश । पु । चण्डाले ॥ की इति कशति कशशब्दे ॥ पचाद्यच् ॥

कीकस. । पु । कृमिजातौ ॥ न । अस्थिनि ॥ त्रि । कर्कशे ॥ कीति कसति कसगतौ ॥ पचाद्यच् ।

कीकसास्यः । पु । पक्षिणि ॥ इतिधारावली ॥

कीचक. । पु । दैत्यविशेषे ॥ राक्षसविशेषे ॥ द्रुभेदे ॥ वंशे ॥ केकयनृपात्मजे । विराटराजश्याले ॥ विपुलाकारावगर्भे वेणुजातौ ॥ अनिलयोगात् शब्दायमानवंशे ॥ चीकति शब्दायते । चीकमर्षणे । वु० । चीकयते रावस्तविपर्य्ययश्चेति वुन् ॥ यद्वा । कीचकस्य शब्दं चकति । चकतृप्तौ । अच् ॥ कीचेन्यञ्च शब्दं कायति वा । मू० कः । अन्येष्वपीति डोवा ॥

कीचकजित् । पु । भीमसेने ॥ कीचकमजैषीत् । जी० । क्विप् । तुक् ।

कीचकभित् । पु । वृकोदरे । भीमसेने ॥ कीचकम् भिनत्ति । भिदिर्० । सत्सूद्विषेति क्विप् । तुक् ॥

कीटः । पु । कृमिः ॥ किञ्चित्स्थूलोऽक्षुद्रजन्तुमात्रे ॥ कीटति । कीट० । अच् ॥

कीटक । पुं । कृमिजातौ ॥ मागधजातौ ॥ त्रि । निष्ठुरे ॥ स्वार्थे क. च न्ना ॥

कीटघ्न । पु । गन्धके ॥ कीटहन्ति । हन० । अमनुष्यकर्तृकेचेतिटक् ॥

कीटजा । स्त्री । अतुनि । लाक्षायाम् ॥ कीटेभ्योजाता । जनी० । ड ॥

कीटपादिका । स्त्री । हंसपदीवृक्षे ॥

कीटमणि । पुं । खद्योते ॥ कीटेषुमणिरिव ॥

कीटमाता । स्त्री । हंसपदीवृक्षे ॥

कीटमारी । स्त्री । हंसपदीवृक्षे ॥

कीटमेष । पुं । मगधिका इतिप्रसिद्धे कीटे । अयंनदीतीरेसिकतामध्येतिष्ठति ॥

कीटसंज्ञक । पुं । राशिविशेषस्य संज्ञायाम् । मकरान्त्यार्द्धं कर्कटमीनवृश्चिकाश्च कीटाख्याः ॥

कीकेर । पुं । तण्डुलीयशाके ॥

कीदृक । त्रि । } किम्प्रकारे ॥
कीदृश । त्रि । }

कीनाशः । पुं । यमे । कृतान्ते ॥ यथा । किङ्कीनाश पाशधर गर्जसि मामुपगम्य शास्तभर मर्जसि । हरिचरणं शरणं नहि पश्यसि यन्नामस्मरणादपिगच्छसीति ॥ वानरविशेषे ॥ त्रि । कर्षके ॥ क्षुद्रे ॥ पशुघातिनि ॥ क्लिश्यश्चयङ्लुक्तायाम् । की क्लिश्नं नाशयति । पचाद्यच् ॥ यद्वा । क्लिश्नाति क्लिश्यते वा । क्लिशू विबाधने क्लि

शवधेर्वा । क्तिश्वरीश्चोपधाया' कन् लोपश्चलोनाम् चेतिकन् उपधाया ईत्वम् ललोपोनामागमश्च ॥

कीर् । पु । शुके । मेधाविनि । फला शने ॥ कीरा' । पुभूम्नि । काश्मीरदेशे ॥ न । मांसे ॥ कीरति ईरयति । ईर० । णिजन्त । अच् ॥

कीरकः । पु । वृक्षविशेषे ॥ चपणके ॥ प्रापणे ॥ शुकशावके ॥

कीरवर्णकम् । न । स्थौणेयकनामनि सुगन्धिद्रव्ये ॥

कीरेष्ट । पु । अचोट वृक्षे ॥ आम्रद्रुमे ॥ जलमधूकवृक्षे ॥ कीराणामिष्ट ॥

कीर्णः । त्रि । दत्ते ॥ आच्छन्ने ॥ विक्षिप्ते ॥ हते । हिंसिते ॥ कीर्यतेस्म । कृ० । क्त' । नत्वणत्वे ॥

कीर्त्तनम् । न । उक्तौ । कथने ॥ का लायास्तुयुचमपीच्छन्तीति ऊतियूतीत्यत्रप्रसादकार' ॥

कीर्त्तना । स्त्री । यशसि ॥

कीर्त्तयन् । त्रि । कथयति ॥ क्रृतेर्लट. शत्रादेश ॥

कीर्त्ति' । स्त्री । प्रसादे ॥ विस्तारे ॥ कर्दमे ॥ शब्दे ॥ दीप्तौ ॥ मातृकाविशेषे ॥ यशसि । समज्ञायाम् ॥ धार्मिकत्वनिमित्तायां प्रशस्तत्वेन नानादिग्देशीयलोकज्ञानविषय - ताहृपायांख्यातौ ॥ परोक्षख्यातौ । मृतख्यातौ ॥ यस्य कीर्त्तिर्हता लोके धिक् तस्यैव कुजीवितम् । दानादिप्रभवा कीर्त्तिः शौर्यादिप्रभवं यश. ॥ कीर्त्तिं स्वर्गफलामाहुरासंसारं विपश्चित । अकीर्त्तिन्तु निरालोकनरकोद्देशदूतिकाम् ॥ तस्मात्कीर्त्तिमुपादद्यादकीर्त्तिञ्च - व्यपोहयेत ॥ सुकर्मपत्नी संसिद्धा कीर्त्तिर्धन्यैश्चपूजिता । ययाविना जगत्सर्वंयशोहीनंमृतंयथा ॥ कीर्त्यते । कृतसंशब्दने । ऊतियूतीतिनिपातनात् साधु । कीर्त्तनम् । कीर्त्ति. सैव । इृपिश्चिकीर्त्त्यादिमेनि ॥

कीर्त्तितः । त्रि । कथिते ॥

कीर्त्तिभाक् । पु । द्रोणाचार्यं ॥ त्रि । कीर्त्तियुक्ते ॥

कीर्त्तिमान् । पु । वसुदेवस्य ज्येष्ठपुत्रे ॥ त्रि । कीर्त्तिसंयुक्ते ॥

कीर्त्तिशेष. । पु । मरणे ॥ यशसो ऽवशेषो ॥

कीलः । पु । स्त्री । अग्निशिखायाम् । ज्वालायाम् ॥ शङ्कौ ॥ शस्त्रे ॥ कफोणौ ॥ कफोणिकाघाते ॥ स्तम्भे ॥ लेशे ॥ कीलति बध्नाति । कील बन्धने । इगुपधेतिक ॥ कील्यते

गुह्यभाषितम् । न । मन्त्रे ॥ गुह्यवाक्ये ॥ गुह्यञ्च तत् भाषितञ्च ॥

गुह्यबीजः । पु । भूतृणे ॥

गुह्याष्टकम् । न । भारभूत्यादिषु ॥ ते च यथा । भारभूत्यषाढिडिण्डि ला कुलेश्वरपुष्कराः । प्रभासनैमिषौ केदारेति गुह्याष्टकमिहुच्यते ॥ इति म मेन्द्रप्रकाशिता ॥

गूः । स्त्री । मले । विष्ठायाम् ॥ गच्छति । गम्लृ° । क्विप् । ऊङ्गमादीनामिति वार्त्तिकेन मलोपोऽकारस्य ऊकादेशः ॥

गूढम् । न । रहसि ॥ गुप्ते ॥ त्रि । अप्रकटे । गुप्ते । संवृते ॥ गहने । कुविशेषने ॥ गुह्यते स्म । गुहू° । क्तः । यस्य विभाषेतीडभावः ॥

गूढकः । पु । गूढोत्पन्नपुत्रे ॥

गूढनीड । पु । खञ्जनखगे ॥

गूढपत्रः । पु । करीरे ॥ अङ्कोठे ॥

गूढपथः । पु । अन्तःकरणे ॥ गुप्तवर्त्मनि ॥

गूढपात् । पु । सर्पे ॥ गूढा पादा अस्य । पृषोदरादिः ॥ यद्वा । गूढं पादयति । पद गतौ । ण्यन्तात् क्विप् ॥

गूढपादः । पु । सर्पे ॥ गूढाः संहताः पादा यस्य । पादाना अपि विशेषे द्वे शते द्वे च विंशती इत्यागमः ॥

गूढपुरुषः । पु । प्रणिधौ । राज्ञोचरे ॥ गूढश्चासौ पुरुषश्च ॥

गूढपुष्पक । पुं । बकुलपादपे ॥

गूढफल । पु । बदरे ॥

गूढमार्गः । पु । भूमध्यमार्गे । सुरङ्गायाम् । सुरङ्ग इति भाषा ॥ गूढश्चासौ मार्गश्च ॥

गूढमैथुन । पु । काके ॥ गूढं मैथुनमस्य ॥

गूढवर्चा । पु । दर्दुरे ॥ गूढं वर्चोऽस्य ॥

गूढवल्लिका । स्त्री । अङ्कोठवृक्षे ॥

गूढसाक्षी । त्रि । योऽर्थिना गूढतया प्रत्यर्थिवचनं श्रावितः सः ॥ तथाच नारदः । अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् । यः श्राव्यते तदा गूढो गूढसाक्षी स उच्यते । इति ॥

गूढाङ्ग । पुं । कच्छपे ॥

गूढाङ्घ्रि । पु । सर्पे ॥

गूढोत्पन्न । पु । पुत्रविशेषे ॥ यथा । उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः । स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥

गूथ । पु । न । मले । प्रकृति ॥ गूयते । गु शब्दे गु पुरीषोत्सर्गे वा । तिथप्रत्ययगूथेति साधु ॥

गूथचक्र । पु । शरमल्ले । कृकचूडे । गु ये सालिक इति गौडभाषा प्रसि

ष्टे खगे ॥

गून । त्रि । कृतपुरीषोत्सर्गे । हन्ने ॥ गूयते स्म । गु० । क्तः । दुग्वोर्दीर्घश्चेति नत्वम् ॥

गूथम् । न । छदमे ॥

गूवाकः । पु । क्रमुके । गुवाके ॥ गुवत्यनेन । गु० । पिना० साधु ॥

गूषणा । स्त्री । मेचके । मयूरपिच्छचक्र ॥

गृञ्जन । पु । लसुन इति प्रसिद्धे रसोनके ॥ रक्तलशुने ॥ इतिराजनिघण्टुः ॥ न । विषदिग्धपशोर्मांसे ॥ सालगम इति प्रसिद्धे कन्दे । शिखिमूले । वर्त्तुले । यवनेष्टे ॥ गृञ्जन. शिखो ग्राही तीक्ष्णोष्णो रोगनाशनः । गन्धाकृतिरसैस्तुल्य सूक्ष्मनालः पलाण्डुना ॥ गृञ्ज्यते भक्ष्यत्वेन कथ्यते रोगेषु । गृजिशब्दे । कर्मणिल्युट् ॥

गृधडीव । पु । लोपाके । पृथुशृगाले । बड़ा मोटा सियाल इतिभाषा ॥ इतिहेमचन्द्रः ॥

गृत्सः । पु । कन्दर्पे ॥ गृध्यति । गृधु अभिकाङ्क्षायाम् । गृधिपण्योर्दकौ चेति स । धातोर्दान्तादेश ॥

गृत्समद । पु । ऋषिविशेष ॥

गृधि । स्त्री । मद्दभिलाषे ॥

गृधु । पुं । कामदेवे ॥ गृध्यति । गृधु० । भृमिदृव्यधिगृधिधृषिभ्यश्‌ति कुः ॥

गृध्नु । त्रि । लुब्धे ॥ गर्द्धनशील । गृधु० । त्रसिगृधिधृषीतिक्नुः । नेड्वशि कृतीतीड्निषेध ॥

गृध्नुता । स्त्री । लुब्धत्वे । रागे । सङ्गे ॥

गृध्र । पु । दाक्षाय्ये । वज्रतुण्डे । परमांसभक्षणाभिकाङ्क्षिणिखगे । गीध इति भाषा ॥ आसन्नमृत्यो र्निपतन्ति गृध्राद्यो मूर्द्धि गृहोर्द्धभागे ॥ त्रि । लुब्धके ॥ गृध्यति । गृधु० । सुसूधागृधिभ्य क्रन् ॥

गृध्रकूट । पु । मगधदेशस्थसीमाशैले ॥

गृध्रनखी । स्त्री । कोलिदले । बदर्याम् ॥ कालियाकड़ा इति गौड़भाषाप्रसिद्धे कण्टकिवृक्षे ॥ शिम्वायाम् । हींस इति भाषाप्रसिद्धे वृक्षे ॥

गृध्रपत्रा । स्त्री । धूम्रपत्रावृक्षे ॥

गृध्रराज । पु । जटायुपक्षिणि ॥

गृध्रसी । स्त्री । जङ्घसन्धौ वातरोगविशेषे ॥ स० यथा । स्फिक्पायूरुकटिपृष्ठजानुजङ्घापद क्रमात् । गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः ॥ वाता वातकफात्तन्द्रागौरवारोचकान्विता । इति ॥ गृध्रमपि स्यति । षो अन्तकर्मणि । आतइति कः । गौरा

दिव्याम् ङीष् ॥

गृष्टिः । स्त्री । सकृत्प्रसूतायां गवि ॥ वराहक्रान्तायाम् ॥ बदरायामोषधौ ॥ काश्मर्याम् ॥ गृह्णाति । ग्रह उपादाने । क्तिच् । पृषोदरादिः ॥ सकृत्प्रसूतायाम् ॥ अतएव गृष्ट्यास्तुष्ट्यात्वेपि गृष्ट्यादिभ्यश्चेत्यत्र पुनर्ग्रहणमकृतम् ॥

गृहम् । न । इष्टकादिरचिते वासस्थाने । गेहे । उदवसिते । वेश्मनि । घर इति भाषा ॥ गृह्णाति धान्यादिकम् । ग्रह० गेहेक. ॥ यद्वा । गृह्यते । गर्ह्यते । इगुपधेतिक. ॥ कलत्रे । भार्यायाम् । दारपरिग्रहस्य चाश्रमस्य तयोरन्यतराश्रमिनिषेविते सर्वकर्मसम्पादके त्रिवर्गकारणे ॥ न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । तया हि सहितः सर्वान् पुरुषार्थान् समश्नुते ॥ नामनि ॥ भवने । राशौ ॥ चतुर्थभवने ॥ गृह्णाति पुरुषं यस्माद्गृहं तेन प्रकीर्त्तितम् ॥ अत्राहव्यास । न गृहं बन्धनागारं बन्धनेन च कारणम् । मनसा यो विनिर्मुक्तो गृहस्थोऽपि विमुच्यत इति ॥ नहि जड गृहं पुरुष बध्नाति नचान्यद्बन्धने कारणमस्ति किन्तु मनस आसक्तिमात्रं कारणं तां विहाय संसारं कुर्वीत इत्यतएवेत्यर्थः ॥

गृहा. । पुभूम्नि । कलत्रे । दारेषु ॥ तात्स्थ्यात् । भवति हि तात्स्थ्यात्ताच्छब्द्यम् । अथवा कोशश्लोकादौ अत्रशब्देन पुरुषार्थापेक्षयापदिश्यन्ते । एवञ्च गृहशब्दो वेश्मनि मुख्यो दारेषुत्वौपचारिक. । अथेदमवधेयम् । गृहशब्दोयमर्द्धर्चादित्वादुभयलिङ्ग । तत्र नपुंसकलिङ्गोऽभिधेयवचन. । पुंल्लिङ्गस्तु बहुवचनान्तएवेति ॥

गृहकच्छप. । पु । पेषणशिलायाम् ॥

गृहकन्या । स्त्री । घृतकुमार्य्याम् ॥

गृहकपोत. । पु । प्रासादकुक्कुटे । भित्तीकपोते । पारावते ॥

गृहकर्त्ता । पु । धूसरेऽतिलघुचटके । धान्यभक्षके ॥

गृहकारक । पु । घरामी राज इति च प्रसिद्धे वर्णसङ्करजातिविशेषे ॥ यथा । प्रतिमाघटकादेव कन्यायां नाभितश्च । सूत्रकारस्य सम्भूति सोपानगृहकारक इति पराशरपद्धति ॥

गृहकारी । पु । कुम्हारी इतिभाषाप्रसिद्धकीटे ॥

गृहकूलक. । पु । चिचिण्डाख्यशाके ॥

गृहगोधा । स्त्री । विशम्बरायाम् । प-

ल्लिकायाम। छिपकली बिस्तुयाइति भाषा ॥

गृहगोधिका । स्त्री । मुषल्याम् । गृह गोधायाम् ॥ अल्पागोधा । अल्पार्थे कम् । गृहस्यगोधिका ॥

गृहगोलिका । स्त्री । पल्ल्याम् ॥

गृहजात । पुं । दास्यामुत्पन्ने दासवि शेषे ॥

गृहणी । स्त्री । काञ्जिके ॥

गृहतटी । स्त्री । वीथ्याम् ॥ इतिहा रावली ॥

गृहद्रुम । पु । मेषशृङ्गीवृक्षे ॥

गृहधूप । पु । गेहधूपे ॥

गृहनाशन: । पुं । वनकपोते । चित्रकण्ठे । घुघुती पिण्डुकिया इतिचभाषा ॥

गृहनीड । पु । चटके ॥

गृहपङ्क्ति' । स्त्री । एचकजनावासपङ्क्तौ । जिसे अब वारिक कहते ॥

गृहपति' । पु । गृहस्थे ॥ सन्निधि । स दात्रदानकर्त्तरि गृहस्थे ॥ मन्त्रवि शेषे ॥ धर्मे ॥ गृहस्यपति ॥ स्त्री । गृह पत्न्याम् ॥ विभाषासपूर्वस्येतिपाक्षि कोनस्याभाव ॥

गृहपाल । पु । शुनि ॥ गृहपालयति । पालरक्षणे । कर्मण्यण् ॥

गृहपोतक. । पु । वास्तौ । हवेली घर इति चभाषा ॥ इतिशब्दरत्ना- वली ॥

गृहप्रवेश' । पु । गृहान्तर्गमने ॥

गृहवभ्रु । पु । गेहनकुले ॥

गृहवलिप्रिय: । पु । वकपक्षिणि ॥

गृहवलिभुक् । पुं । चटके ॥ काके ॥ वके ॥

गृहभूमि । स्त्री । वास्तौ । वेश्मभुवि ॥

गृहमणि. । पु । दीपे ॥

गृहमाचिका । स्त्री । चर्मचट्याम् । क जिनपत्राथाम् । चाम् चिरथ्या इति भाषा ॥

गृहमृग: । पुं । कुक्कुरे ॥

गृहमेधी । पु । कृतदारपरिग्रहे । गृ हस्थे ॥ गृहैं दारै मेधते सङ्गच्छते । मेधृसङ्गमे च । सुप्यजातौणिनि ताच्छील्ये इति णिनि ॥

गृहमेधिनी । स्त्री । साग्निकापि बुद्धौ ॥ गृहस्थपत्न्याम् ॥

गृहमेधीयम् । न । गृहमेध्ये ॥ गृह मेधो देवतास्य । द्यावापृथिवीतिछ: ॥

गृहमेधीय । पु । गृहाश्रमविहितेक र्मादौ ॥

गृहमेध्यम् । न । गृहमेधीये ॥ गृहमे धो देवतास्य । द्यावापृथिवीतियत् ॥

गृहयाय्य । पु । गृहस्वामिनि ॥ गृहयते । गृहग्रहणे । श्रुदक्षिस्पृहिगृहिभ्य आय्य: ॥

गृहयालु: । पु । गृहीतरि । गृहयाशी ले ॥ गृहयते तच्छील । गृह०चु० । स्पृहिगृहिपतीत्यालुच् । अयाम न्तेतिणेरयादेश ॥

गृहवाटिका । स्त्री । गृहान्तिककृता रामे ॥

गृहसवेशक । पु । गृहसन्निवेशोपदे शके । वास्तुविद्योपजीविनि ॥

गृहस्थ । पु । गृहिणि । गृहपतौ । ज्येष्ठाश्रमिणि । द्वितीयाश्रमिणि ॥ न्यायार्जितधन स्तत्त्व ज्ञाननिष्ठोऽ तिथिप्रिय. । श्राद्धकृत् सत्यवादी च गृहस्थो ऽपिविमुच्यते ॥ गृहशब्दस्य दारवचनत्वात् कृतदारपरिग्रहोगृ हस्थ । गृहेतिष्ठति । ष्ठा० । सुपि स्थइतिक. ॥

गृहस्थूणम् । न । गृहस्तम्भे ॥ गृहस्य स्थूणा ॥

गृहाक्ष । पु । वातायने ॥

गृहागत. । पु । अतिथौ ॥ त्रि । गेह मायाते ॥

गृहाधिप । पु । गृहस्थे ॥

गृहाम्लम् । न । काञ्जिके ॥

गृहायनिक । पु । गृहिणि ॥

गृहाराम । पु । निष्कुटे । गृहोपवने ॥ गृहस्यआराम ॥

गृहाक्षिका । स्त्री । मकुनकायाम् । गृहगोधिकायाम् ॥

गृहावग्रहणी । स्त्री । देहल्याम् ॥ गृह मवगृह्यते ऽनया । ग्रहउपादाने । करणे ल्युट् ॥

गृहाश्रया । स्त्री । ताम्बूल्याम् । नागव ल्ल्याम् । पानकी बेल इतिभाषा ॥

गृहाश्मा । पु । मेषशृङ्गिकायाम् । सि ल इतिभाषा ॥

गृहासक्त । पु । गृह्यके ॥ त्रि । गृहे आसक्तिविशिष्टे ॥

गृहिणी । स्त्री । भार्यायाम् ॥ इनिमे त्वर्थीय' । ङीप् । गेहकर्मकुशला याम् ॥

गृही । पु । गृहस्थे ॥ गृहा दारा स न्त्यस्य । इनि ॥

गृहीत । त्रि । स्वीकृते ॥ज्ञाते ॥ प्रा से ॥ धृते ॥ गृहीत इव केशेषुमृ त्युना धर्म माचरेत् ॥

गृहीतदिक् । त्रि । पलायिते । तिरो हिते ॥

गृहीति । स्त्री । ग्रहणे ॥

गृहीती । स्त्री । गृहीतवति ॥ गृही तमनेन । इष्टादिभ्यश्चेति कर्त्तरि इनि ॥

गृहेनर्दी । पु । गेहेशूरे ॥

गृहेश । पु । गृहपतौ ॥

गृहोक्षिका । स्त्री । पल्ल्याम् ॥

गुह्यः । पु । गुह्यासक्तप्रगापख्जयोः ॥ गुह्यते । गुहू० । पदास्वैरीतिक्यप् ॥ न । मलवर्त्मनि । गुदे ॥ ग्रन्थप्रभेदे । गुह्यसूचे ॥ त्रि । अस्वैरिणि ॥ पचे ॥ गुहू० । ऋदुपधाच्चाकृपिचृतेरितिक्यप् ॥ गृहेभवो वा । यत् ॥

गुह्यक । पु । छेके । गुह्यासक्तपक्षिम्रगयोः ॥ त्रि । निघ्ने । आयत्ते ॥ क्यवन्मात् स्वार्थे ऽनुकम्पायां वाकन् ॥

गुह्या । स्त्री । ग्राखापुरे ॥ इतिमेदिनी । टाप् ॥

गेन्दु । पु । } कन्दुके । गेंद इतिभाषा ॥ गे गमने इन्दुरिव ॥ गे इन्दुरिव प्रतिकृतिर्वा । इवेप्रतिकृतावितिकन् ॥ पृषोदरादित्वाद्दीर्घ ॥
गेन्दुक । पु ।
गेन्दूक । पु ।

गेयम् । न । गीते ॥ यथा । गेयगीतानामसहस्रम् ॥ त्रि । गातव्ये ॥ गायने ॥ अर्हेकृत्यतृचश्चेति योग्यतायामचोयत् । ईद्यति । गुण ॥ गायति । गैशब्दे । भव्यगेयेति कर्त्तरिवायत् । गीयते इतिवा ॥

गेष्ण । पु । पर्वणि ॥

गेष्णु । पु । गायने ॥ नटे ॥ गायति । गै० । गादाभ्यामिष्णुच् ॥ सामगानकर्त्तरि ॥

गेहम् । न । उद्वसिते । गृहे ॥ गेन गणेशेन ईह्यते काम्यते । ईह० । कर्मणि घञ् ॥ गेगणेशो गन्धर्वो वा ईह ईप्सितोयस्मिन् वा ॥

गेहधूप । पु । अपराजितधूपे ॥ यथा । मयूरपिच्छं निम्बस्यपत्राणि बृहतीफलम् । मरिच हिङ्गु मांसी च वीजं कर्पाससम्भवम् ॥ छागरोमा ऽहिनिर्मोको विष्ठा वैडालिकी तथा । गजदन्तस्य तच्चूर्णं किञ्चिद्घृतविमिश्रितम् ॥ गेहेषु धूपनं दत्त सर्वान् बालग्रहान् जयेत् । पिशाचान् राक्षसान् हत्वा सर्वज्वरहरं भवेदिति॥

गेही । पु । गृहिणि ॥

गेहेनर्दी । पु । कापुरुषे । पिण्डीशूरे॥

गेहेशूर । पु । गेहेनर्दिनि ॥ इतिहेमचन्द्रः ॥

गैरिकम् । न । रक्तधातौ । गेरु इतिभाषा ॥ गैरिकं रक्तधातुश्च गैरेय गिरिजन्तथा । सुवर्णगैरिकं त्वन्यत् ततो रक्ततरं हि तत् ॥ गैरिकद्वितयं स्निग्धं मधुरं तुवरं हिमम् । चक्षुष्यं दाहपित्तास्रकफहिक्काविषापहम् ॥ स्वर्णं ॥ गिरौ भवम् ॥ अध्यात्मादित्वाट्ठञ् ॥

गैरिकाक्ष । पुं । जलमधूकवृक्षे ॥

गैरी । स्त्री । शाङ्गलिकौषधे ॥

गैरेयम् । न । शिलाजतुनि ॥ गिरौभव

वम् । नद्यादिभ्यश्चेतिढक् ॥

गो. । पु । बलीवर्दे । अनडुहि ॥ स्वर्गे । रश्मौ ॥ कुलिशे । वज्रे ॥ चन्द्रे ॥ सूर्ये ॥ गोमेधयज्ञे ॥ ऋषभनामौषधे ॥ स्त्री । सौरभेय्याम् । अर्जुन्याम् । उस्रायाम् ॥ गोमांसं गुरु सुस्निग्धं पित्तश्लेष्मविवर्द्धनम् । बृंहणं वातहृद्बल्यमपथ्यं पीनसप्रणुत् ॥ चक्षुषि ॥ वाचि ॥ दिशि ॥ मातरि ॥वाणि ॥ भूमौ ॥ वृषराशौ ॥ नवाङ्के ॥ गच्छति गम्यते वा ऽनेन वा । गम्लृ° । गमेर्डोः ॥

गाव । पुभूम्नि । उदके । जले ॥

गोकण्टक । पु । गोक्षुरके ॥ स्थपुटे । विषमोन्नते ॥ गोक्षुरै स्थपुटीकृते इति हेमचन्द्र ॥ गवां क्षुरे ॥ विकङ्कतवृक्षे ॥ गोर्भेनो. पृथिव्या वा कण्टकः ॥

गोकर्ण । पुं । अश्वतरे ॥ सर्पे ॥ गौः कर्णोयस्य । गोशब्दस्य चक्षु परत्वात् गोकर्ण. सर्पः ॥ सारङ्गे । मृगविशेषे ॥ गोरिवकर्णोयस्य ॥ गणदेवताविशेषे ॥ अङ्गुष्ठानामिकोन्माने । अनामिकायुक्तविस्तृताङ्गुष्ठे ॥ गोः कर्णइव ॥ क्षेत्रे सिद्धत्वेनविशेषे ॥ यथा । महाबलञ्चगोकर्णे शिवभद्रा चचण्डिकेष्वागम. । गोकर्णे भद्रकर्णीत्यादि तिदेवीगीता ॥

गोकर्णी । स्त्री । मूर्वालतायाम् ॥ गो. कर्णइव । गौ. कर्णोयस्या वा ॥ पाककर्णेतिङीष् ॥

गोकिराटिका । स्त्री । विट्सारिकायाम् ॥

गोकिराटी । स्त्री । सारिकाख्यखगे ॥

गोकिल. । पु । मुसले ॥ हले ॥

गोकील' । पु । मुषले ॥ लाङ्गले ॥

गोकुलम् । न । गोसमूहे । गोधने ॥ गोस्थाने ॥ यथा । गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयो' । अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च ॥ व्रजेप्रसिद्धेनन्दावासे ॥ गवां कुलम् ॥

गोकुलिक. । पु । कैकरे । बधिरे ॥ पङ्कस्थगव्युपेक्षके ॥

गोकृतम् । न । गोमये ॥ त्रि । गोभि रा कृते ॥

गोक्षुर' । पु । गोक्षुरके ॥ गोक्षुर. शीतल. स्वादु र्बलकृद् वस्तिशोधनः । मधुरो दीपनो वृष्यः पुष्टिद् श्चाश्मरीहर ॥ प्रमेहश्वासकासार्शः कृच्छ्रहृद्रोगवातनुत् ॥ क्षुरति । क्षुर विलेखने । इगुपधज्ञाप्रीकिर कः । गौर्गोर्वा क्षुर. ॥

गोक्षुरक. । पु । गोक्षुर इतिभाषाप्र

सिद्धार्थापलङ्कषायाम् । स्वादुकण्टके ॥ गौर्गौर्वा चुर: ॥ स्वार्थेकन् ॥

गोखुर । पु । गोक्षुरे ॥ न । गवांशफे ॥

गोगोयुगम् । न । गोद्वये ॥ द्वौगावौ । द्विखेगोयुगच् ॥

गोगोष्ठम् । न । गवांस्थाने ॥ गोष्ठजाद्य: स्थानादिषु पशुनामभ्य: ॥

गोग्रन्थि । पु । करीषे ॥ गोष्ठे ॥ गोजिह्विकौषधौ ॥

गोघृतम् । न । गव्येघृते ॥ वर्षणे ॥

गोघ्न । पु । अतिथौ ॥ त्रि । गोघातके ॥

गोचर । पुं । इन्द्रियार्थे । रूपशब्दगन्धरसस्पर्शस्वरूपे ॥ प्रयुञ्जतेहि । उपादानगोचरज्ञानमिति ॥ देशे । गवांजग्धिस्थाने । वने ॥ तथाचभारवि । उपारता: पश्चिमरात्रिगोचरादिति ॥ जन्मराश्यवधिग्रहचक्रान्तराराशिषु ॥ गावइन्द्रियाणि चरन्त्यस्मिन् । गोचरसञ्चरेतिनिपातित ॥ त्रि । गोगामिनि ॥

गोचरफलम् । न । जन्मराशे सकाशात् ग्रहाणां सञ्चारवशेन शुभ शुभफले ॥ गोचरशुद्धिर्यथा । केतूपप्लवमौमजमन्दगतय: षष्ठत्रिसस्था शुभा स्चन्द्रार्कावपि तेचतौच दशमौ चन्द्र पुन: सप्तम: । जीव: सप्तनवद्विपञ्चमगतो युग्मेषु सोमात्मज शुक्र: षड्दशसप्तवर्ज्जमितरे सर्वेष्युपान्ते शुभा इति ॥

गोचर्म्म । न । गोस्त्वचि ॥ परिमाणविशेषे ॥ सप्तहस्तेन दण्डेन त्रिंशद्दण्डैर्निवर्त्तनम् । दशतान्येव गोचर्म्म दत्त्वा स्वर्गे महीयतइति वृहस्पति: ॥ यत् किञ्चित् कुरुते पाप ज्ञानतोऽज्ञानतोऽपिवा । अपि गोचर्म्ममात्रेण भूमिदानेन शुद्ध्यतीत्याचारे मिताक्षरा ॥

गोची । स्त्री । हिमालयपत्न्याम् ॥ गाव स्तुतिरूपा श्रुतिस्मृतीतिहासपुराणादिसम्बन्धिनी र्महादेवविषयिणी वाँच अञ्चति पूजयति यद्वा गच्छति प्राप्नोति तात्पर्य्यरूपेण शृणोति । अञ्चु॰ । क्विप् । ङीप् ॥

गोच्छाल । पु । भूकदम्बे । कोकशिमा इति गौडभाषा ॥

गोजर: । पु । वृद्धवलीवर्द्दे ॥

गोजलम् । न । गोमूत्रे ॥

गोजा । स्त्री । गोलोमिकाद्यम् ॥ पृथिव्यां व्रीहियवादिरूपेणोत्पन्नयाम् ॥ गोषु जायते । जनी॰ । जनसनेति विट् । विड्वनोरित्यात्वम् ॥

गोजागरिक । पु । भक्ष्यकारके ॥ न । मङ्गले ॥

गोजापर्णी । स्त्री । क्षुद्रक्षुपविशेषे । दुग्धफेनीवृक्षे । शणकेतुघ्न्याम् ॥

गोजिह्वा । स्त्री । दार्विकायाम् । गोजियालता दारियाशाक इतिचगौडभाषा ॥ गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत् । हृद्याप्रमेहकासास्रव्रणज्वरहरी लघु ॥ कोमला तुवरा तिक्ता स्वादुपाकरसा स्मृता ॥ पत्रशाकस्ततुगुणा । गोजिह्वा कुष्ठमेहास्रकृच्छ्रज्वरहरी लघु ॥ गोजिह्वेव ॥

गोजिह्विका । स्त्री । गोजिह्वालतायाम् ॥ गोजिह्वेव । कन ॥

गोडिम्ब । पु । मृगालजम्बाम् ॥

गोडुम्ब । पु । शीर्षहन्ते । तरमूज इति भाषा ॥

गोडुम्बा । स्त्री । गवादन्याम् । चित्राख्यकर्कव्याम् । गोमुक इतिगौडभाषा ॥ गांभुवं तुम्बति । तुबिअर्दने । मू॰क । पृषोदरादि. ॥

गोडुम्बिका । स्त्री । गोडुम्बायाम् ॥

गोणी । स्त्री । धान्याधारे गूण इतिभाषाप्रसिद्धे आवपने ॥ गोणशब्दात् आवपनेर्थे जानपदकुण्डगोणेति ङीष् ॥ छिद्रवस्त्रे । शाणाम् ॥ धान्यमानभेदे ॥ विंशतिपर्णो मायुदाहृता तामेव भारंजानीयादित्युक्तः ॥ द्रोणीपरिमाणमिति वैद्यकपरिभाषा ॥

गोणीतरी । स्त्री । ह्रस्वगोण्याम् ॥ ह्रस्वागोणी । काशूगोणीभ्यांष्टरच् । षित्त्वात् ङीष् ॥

गोण्ड । पु । पामरजातौ ॥ वृद्धनाभौ । नाभिगुडके ॥ त्रि । वृद्धनाभिवति ॥ गो भण्ड इव ॥

गोतम । पु । ब्रह्मण पुत्रे गौतममुनौ ॥

गोतमान्वय । पु । शाक्यमुनौ ॥

गोतीर्थम् । न । गोष्ठे ॥

गोत्र । पु । अद्रौ । पर्वते ॥ न । आख्यायाम् । नामनि ॥ सम्भावनीयबोधे ॥ कानने ॥ क्षेत्रे ॥ वर्त्मनि ॥ छत्रे ॥ सजातीयगणे ॥ पूर्वाचार्याणांमतेनाऽपत्ये ॥ कुले । अभिजने । ऋषिशब्दवाच्ये आदिपुरुषे स्वसन्तानसंज्ञाकारिणि ब्राह्मणरूपे ॥ क्षत्रियवैश्ययोः उपदिष्टातिदिष्टगोत्रम् । शूद्रस्यातिदिष्टातिदिष्टगोत्रम् । यथा । न समानगोत्रां भार्यां विन्देतेत्यनेन शूद्रस्यापि सगोत्रा कथं न निषिध्यते इतिचेत् अत्रोपदिष्टातिदिष्टगोत्रस्यैवनिषेधो नत्वतिदिष्टातिदिष्टशूद्रगोत्रादेरितिनिर्णय.॥ क्षत्रियवैश्यशूद्राणां मतिदिष्टातिदिष्टगोत्रप्रवरम् अतएवैतेषांपुरोहितगोत्रप्रवरमित्यर्थः । तथाचाग्निपुराणे

वर्णसङ्करोपाख्याने । चान्यवैश्यशूद्राणां गोत्रञ्च प्रवरादिकम् । तथान्यवर्णसङ्कराणां येषां विप्राश्च याजकादूति ॥ गोत्राणितु चतुर्विंशति । तथाचमनुः । शाण्डिल्य काश्यपश्चैव वात्स्य सावर्णक स्तथा । भरद्वाजो गौतमश्च सौकालीन स्तथापर ॥ कल्किष श्चाग्निवेश्यश्च कृष्णात्रेयव शिष्ठकौ । विश्वामित्र कुशिकश्च कौशिक श्चतथापर ॥ घृतकौशिकमौद्गल्यौ आलम्यानः पराशर । सौपायन स्तथाऽत्रिश्च वासुकी रोहितस्तथा ॥ वैयाघ्रपद्यकश्चैव जामदग्न्य स्तथापर । चतुर्विंशति गोत्राणांक थिताःपूर्वपण्डितैः ॥ अपिचमनुः । जमदग्नि भरद्वाजो विश्वामित्रात्रिगौतमाः । वशिष्ठकाश्यपागस्त्या मुनयो गोत्रकारिणः ॥ एतेषां यान्यपत्यानि तानिगोत्राणिमन्वते । एतदुपलक्षणमन्येषामपि दर्शनात् । तथाच । सौकालीनकमौद्गल्यौ पराशरवृहस्पती । काश्चनो विष्णुकौशिकौ कात्यायनात्रेयकाणवका ॥ कृष्णात्रेय साङ्कृतिश्च कौण्डिन्यो गर्गसञ्ज्ञक । आङ्गिरसद्गतिख्यात अनाद्यकाख्यसंज्ञिता ॥ अव्य जैमिनिदर्ङ्गाख्या. शाण्डिल्यो वात्स्यएवच । सावर्णालम्यानवैयाघ्रपद्याश्च घृतकौशिक ॥ शक्तिः कात्यायनश्चैव वासुकीगौतम स्तथा । शुनकसौपायनश्च मुनयो गोत्रकारिणः ॥ एतेषां यान्यपत्यानि तानि गोत्राणि मन्वते । सर्वेद्विजक्षत्रियगोत्रा ॥ इतिवनञ्जयकुलधर्मप्रदीपः ॥ गूयते शब्द्यते स्वसन्तानप्रभवोऽनेन । गुङ्शब्दे । त्रन् । गुधृवीपचीत्यादिनात्रो वा ॥ गां त्रायते वा । नैरूपावने । आतोनुपसर्गे इति क ॥

गोत्रजः । त्रि । गोत्रोत्पन्ने ॥ सतु जन्मनामस्मृतिपर्यन्तसमानोदकभावात् पश्चाद्भवति ॥

गोत्रभिद् । पुं । इन्द्रे । शक्रे ॥ गोत्रान् गिरीन् भिनत्ति । भिदिर्० । सत्सूद्विषेति भिदे क्विप् ॥

गोत्रवृक्ष । पु । धन्वनवृक्षे ॥

गोत्रसम्भव । पु । पक्षिविशेषे ॥

गोत्रस्खलनम् । न । अन्यस्त्रीनाम ग्रहणे ॥ यथा । गोत्रस्खलने भ्रान्ति मानिनिजानीहि केवलां मेऽञ्च । व्याख्यानतो विशेषप्रतिपत्ति पाणिनीय-दूवेति ॥

गोत्रा । स्त्री । कै । पृथिव्याम् ॥ गोत्राशैला सन्त्यस्याम् । अर्शआद्यच् ॥ गा त्रायते वा । त्रैङ्० । क ।

टाप् ॥ गव्यायाम् । गवांगणे ॥ गवां समूह । इति वकज्यचश्चेति च ॥

गोद' । पु । मस्तिष्के ॥ चि । गोप्रदे ॥ गांददाति । डुदाञ्० । आतश्तिकः ॥

गोदन्तम् । न । नटमण्डने । हरिताले ॥ पु । गोदन्ते ॥

गोदा । स्त्री । गोदावर्यां नद्याम् ॥

गोदानम् । न । व्रतविशेषे । केशान्ते ॥ गाव'केशा दीयन्तेखण्ड्यंते ऽस्मिन् । डुदाञ्० । कर्मणि ल्युट ॥

गोदारणम् । न । हले ॥ कुद्दाले ॥ गां भूमिं दारयति । दृविदारणे । ल्युट् ॥ गौ भूमिर्दीर्यते ऽनेन । करणेल्युड्वा ॥

गोदावरी । स्त्री । नदीविशेषे । गौतमसम्भवायाम् । ब्रह्माद्रिजातायाम् ॥

गोदुग्धम् । न । गो' चीरे ॥ अस्यगुणा । गव्यं दुग्धं विशेषेण मधुर रसपाकयो' । शीतलं स्तन्यकृत् स्निग्ध वातपित्तास्रनाशनम् ॥ दोष धातुमलस्रोत किञ्चत् क्लेदकरं गुरु । जरासमस्तरोगाणां शान्तिकृत् सेवितं सदा ॥ * ॥ कृष्णाया गोर्भवे दुग्ध वातहारिगुणाधिकम् । पीताया हरते पित्त तथ वात हरं भवेत् ॥ श्लेष्मल गुरु शुक्लाया रक्ताचित्राच वातहृत् । वाखवत्सविवत्सानां गवां दुग्ध त्रिदोषकृत् ॥ वष्कयिण्या त्रिदोषघ्न तर्पणं बलकृत् पय । जाङ्गलानूपशैलेषु चरन्तीनां यथोत्तरम् । पयो गुरुतरं स्नेहो यथाहारं प्रवर्त्तते ॥ अल्पतृणभक्षणाज्जातं चीर गुरु कफप्रदम् । तत्तु बल्य परंवृष्य स्वस्थानां गुणदायकम् ॥ पलालतृणकार्पासबीजजं रोगिणो हितम् ॥ * ॥ अपिचाह राजनिघंटः । गवां प्रत्यूषसि चीरं गुरुविष्टम्भि दुर्जरम् । तस्मा दभ्युदिते सूर्ये याम यामार्द्धमेवचा ॥ समुत्तार्य पयोग्राह्यं तत पथ्य दीपनं लघु । विवत्सावालवत्सानां पयो दोषलमीरितम् ॥ समवत्सैकवर्णायाधवलीकृष्णायो रपि । इत्यादा भाषर्णादा ऊर्द्धशृङ्गी च या भवेत् ॥ तासां गवां हितं चीर शृतं वा ऽशृतमेव वा । गवां सितानां वातघ्नं कृष्णानां पित्तनाशनम् ॥ श्लेष्मघ्नं रक्तवर्णानां त्रीन् हन्ति कपिलापय. ॥ इति ॥

गोदुग्धदा । स्त्री । चणिकाह्वये तृणीजायाम् ॥

गोधुक् । पु । गोपे । गोदोग्धरि ॥ गां दोग्धि । दुह प्रपूरणे । सत्सूद्विषेतिक्विप् ॥

गोदुह । पुं । गोदुहि । गोपे ॥ गां दोग्धि । दुह० । मू० क ॥

गोदोहनम् । न । गवां दोहनस्थाने ॥ गावो दुह्यन्ते ऽस्मिन् । ल्युट् ॥ कालविशेषे । मुहूर्त्ताऽष्टमभागे ॥ यथा । आचम्य च ततः कुर्यात् प्राज्ञो द्वारावलोकनम् । मुहूर्त्तस्याष्टम भागमुद्दीक्ष्योद्यतिथिर्भवेत् इति ॥

गोदोहनी । स्त्री । गोदोहनपात्रे । पात्र्याम् ॥ गौर्दुह्यते यस्याम् । दुहेः करणाधिकरणयोश्चेति ल्युट् । ङीप् ॥

गोद्रम । पु । गोमूषे ॥

गोधन । पु । स्थूलाग्रवाणे । तुक्का इति भाषा ॥ इतिहरिवंश ॥ न । गोसमूहे । गोकुले ॥ गवां धन समूह ॥

गोधा । स्त्री । तलायाम् । ज्याघातवारणे । धनुर्गुणाघातवारणाय प्रकोष्ठतआवद्धायां चर्मपट्याम् ॥ निहाकायाम् । गोधिकायाम । गोह इति भाषा ॥ अस्या मांसपाकविधिः । गोधा व्योषजलैर्भूय चालितां खण्डशः कृताम् । स्विन्नाञ्च तक्रतोयाभ्यां चालितां सूक्ष्मखण्डिताम् ॥ तथैव द्रवेसवाराड्ये प्रलेह्ये वा विधानतः ॥ विपाके मधुरा गोधा वातपित्तप्रणाशिनी । कषाया कटुका प्रोक्ता कफघ्नी बलवर्द्धनी ॥ सा तु स्वस्वजलभेदाद्द्विधेति व्याख्यातारः ॥ गुध्यते वाहुर्यया । गुधपरिवेष्टने । हलश्चेति घञ् ॥

गोधापदिका । स्त्री । गोधापदीलतायाम् । गोयालिया इति गौड भाषा ॥

गोधापदी । स्त्री । सुवहायाम् । गोधापदिकायाम् ॥ गोधा इव पादो मूलमस्या । कुम्भपदीषु चेति साधु ॥

गोधास्कन्ध । पु । विट्खदिरे ॥

गोधि । पु । ललाटे ॥ गोधिकायाम् ॥ गुध्यते । गुध० । इन ॥ गावो नेत्राणि शेरते यस्मिन् । कर्मण्यधिकरणे चेति किर्वा ॥

गोधिका । स्त्री । गोधायाम् । निहाकायाम् ॥ गोहेति प्रसिद्धे जलचरे ॥ गुध्यति । गुध० । ण्वुल् ॥

गोधिकापुत्र । पु । गोधाशावके । गौधेये । सर्पाद्गोधायामुत्पन्ने चन्दनगोह इति प्रसिद्धे जन्तुविशेषे ॥ गुध्यति । गुध० । ण्वुल् । गोधिकायाः पुत्रः ॥

गोधिनी । स्त्री । वृहतीभेदे । चविकायाम् ॥

गोधुमः । पु । गोधूमे ॥ इति शब्दचन्द्रिका ॥

गोधूम । पु । नागरङ्गे ॥ ओषधीविशेषे ॥ गोहूं इति प्रसिद्धे व्रीहिविशेषे

षे । रसाले । सुमने ॥ गोधूम सुमनो ऽपिस्यात् त्रिविध. सच कीर्त्तित । महागोधूम इत्याख्य पश्चाद्देशात् समागत ॥ मधूलीतु तत. किञ्चिद्दल्पा साऽमध्यदेशजा । निःशूको दीर्घगोधूम. क्वचिन्नन्दीमुखाभिध ॥ गोधूमो मधुर शीतो वातपित्तहरो गुरु । कफशुक्रप्रदो बल्य स्निग्ध सन्धान कृत् सर ॥ जीवनो बृंहणो वर्ण्यो वण्यो वीर्यस्थिरत्वकृत् । कफप्रदो नवीनो नचपुराण । पुराणयवगोधूमक्षौद्रजाङ्गलशूल्यभुगिति वाग्भटेनवसन्ते गृहीतत्वात् ॥ मधूली शीतला स्निग्धा पित्तघ्नी मधुरा लघु । शुक्रला बृंहणी पथ्या तद्वन्नन्दीमुखा स्मृता ॥ गुध्यति गुध्यते वा । गुध० । गुधेरूम ॥

गोधूमसम्भवम् । न । काञ्जिकप्रभेदे । सौवीरे ॥

गोधूमसार । पु । सुमनस्य सारांशे । सीरा इति सत्प्रतिचख्याते ॥ तद्विधिर्यथा । निस्तुषान् गोधूमान् उदूखले कण्डयित्वा सायङ्काले मृत्तिकादिपात्रे जले मज्जनं कारयित्वा परदिने प्रभातसमये उपरिस्थजलंक्रमेण दूरीकृत्वा ऽधस्थसार आतपे शुष्कं कृत्वा पाषाणादिस्थापयेदितिपाव राजेश्वर ॥

गोधूमी । स्त्री । गोलोमिकायाम् । गोधूमा इति पायरी इतिचगौडभाषाप्रसिद्धे क्षुद्रक्षुप विशेषे ॥

गोधूलि । पुं । स्त्री । समयविशेषे ॥ यथा । सन्ध्यातपारुणितपश्चिमदिग्विभागे व्योम्नि स्फुरन्निरवतारकसन्निवेशे । बद्धे गवां खुरपुटाग्रविते रजोभि गोधूलि रेष कथितो भृगुजेन योग ॥ अपिच । यावत्सिन्दूरवर्णं गगनतलगतं भानुबिम्बं च नास याव नो दिक्षु यान्ति व्रजति खुरपुटे रुद्धैतो रेणुसङ्घ. । तावद्वैवाहिदोषः प्रशमयतिनच सा क्रूरदृष्टि ग्रैहायां याचायां मा विवाहे सकलशुभकरी सर्वकार्यस्य सिद्धि ॥ शान्तिविधेरिति दीपिका । यथा । गोधूलिं त्रिविधां वदन्ति मुनयो नारीविवाहादिके हेमन्ते शिशिरे प्रयाति मृदुतां पिण्डीकृते भास्करे । ग्रीष्मे ऽर्द्धास्तमिते वसन्तसमये भानौमते दृश्यतां सूर्ये चास्तमुपागते च नियतं वर्षाशरत्कालयो. ॥ हेमन्तशिशिरयो मृदुता प्राप्तपिण्डीकृतरविकाल. । ग्रीष्मे ऽर्द्धास्तरविकाल. । वर्षाशरद्वसन्तेषु ऽस्तगतार्कोचाव एव ॥

गोनन्दी । स्त्री । सारसखगस्त्रियाम् ॥

गोनर्द । पु । सारसखगे ॥ पर्वतविशेषे ॥ न । कैवर्त्तीमुस्तके ॥ गांजलं नर्दयति । नर्द शब्दे । कर्मण्यण् ॥

गोनर्दीय । पु । पतञ्जलिमुनौ । गोनर्दे ॥ गोमर्द्दभव । छ्राच्छ ॥

गोनस । पु । सर्पविशेषे । तिल्वित्से । मणिलीवोडे ॥ गौरिव नासिका अस्य । अच्नासिकाया इत्यच् नसादेशश्च ॥ वैक्रान्तमणौ ॥

गोनाथ । पु । अनडुहि ॥

गोनाय । पु । गोपाले ॥ गांनयति । णीञ् प्रापणे । कर्मण्यण् ॥

गोनास । पु । गोनसे ॥ गौरिव नासा यस्य ॥ न । वैक्रान्तमणौ ॥

गोनिष्यन्द । पु । गोमूत्रे ॥

गोप । पु । गुवाल इति भाषाप्रसिद्धे सङ्करजातिविशेषे । आभीरे । बल्लवे ॥ मणिवन्ध्यां तन्त्रवायात् गोपजाते श्च सम्भव इति पराशरपद्धतिः ॥ गोष्ठाध्यक्षे ॥ भूपतौ ॥ ग्रामौघाधिकृते ॥ बोले ॥ त्रि । रक्षके । उपकारके ॥ गोपायति । गुपू रक्षणे । आयादय आर्द्धधातुकेवा । अच् ॥ गांपातिवा । पा रक्षणे । आतोनुपेतक ॥ गोर्जलात् पातिवा । पा० । सुपीतिक. ॥

गोपक । पुं । गोपशब्दार्थे ॥ स्वार्थेक ॥

गोपकन्या । स्त्री । आभीरसुतायाम् ॥ शारिवौषधौ ॥

गोपघोण्टा । स्त्री । हस्तिकोलौ । बदरीच्छदायाम् ॥ बदरीसदृशाकारो वृक्ष. सूक्ष्मफलो भवेत् । कण्टैर्मेवसा घोण्टा गोपघोण्टेतिचोच्यते ॥ विकङ्कतवृक्षे ॥

गोपति । पु । शिवे । शम्भौ ॥ षण्डे । साँड इति भाषाप्रसिद्धे वृषे ॥ व्रमे ॥ भास्करे ॥ निदशाधिपे ॥ ऋषभनामौषधौ ॥ गवांपति. ॥ श्रीकृष्णे ॥ गवांपालनात् । गौर्भूमेत-स्या' पतिर्वा ॥

गोपदल । पु । गुवाके ॥

गोपनम् । न । अपह्नवे ॥ गोपनाद्दीयते सत्यन गुप्तिरन्वतविना ॥ रक्षायाम ॥ तेजपात इति भाषाप्रसिद्धे तमालपत्रे ॥

गोपनीय । त्रि । गोपितव्ये । गोप्ये ॥

गोपभद्रम् । न । शालूके ॥

गोपभद्रा । स्त्री । काश्मर्याम ॥

गोपभद्रिका । स्त्री । गम्भार्याम् ॥

गोपवधू । स्त्री । शारिवायाम् ॥ गोपाङ्गनायाम् ॥ गोपीएववधू । स्त्रिया' पुवद्भिख्यादिनापुवद्भाव. ॥

गोपरस. । पु । बोले । गन्धरसे ॥ गो

पे उत्पत्तौ रक्षोम् ॥

गोपवल्ली । स्त्री । मूर्वायाम् ॥ शारिवायाम् ॥ श्यामालतिकायाम् ॥

गोपा । स्त्री । गोपालिकायाम् ॥ श्यामालतायाम् ॥ गोपायति । गुपू० । पचाद्यजन्तात् अजादित्वाट्टाप् इति केचित् ॥ गां पाति । पा रक्षणे । आतोनुपसर्गे इति केप्राप्ते । वासरूपन्यायेन आतोमनिन् क्वनिब्वनिपश्चेति येन विच् अदन्तत्वाभावाद्दाब्विधेरभावे गोपा' विश्वपावदितिबोध्यम् ॥

गोपानसी । स्त्री । छादनाम्बुदारुभित्ति । वडभ्याम् । कुड्येषु छादनार्थं दत्ते वक्रकाष्ठे ॥ छादनाधारे । पटलाधारवंशपञ्जरे ॥ गोपायति । गुपू० । बाहुलकात् असच् प्रत्यय । अल्लोपय लोपौ ॥ गवां गोभिर्वा पानम् किरणामां ग्रहणम् किरणैर्वा शोषणम् । तत् स्यति निवर्त्तयति । षोन्तकर्मणि । आतोनुपेसिक । गौ० ङी ॥ ष्

गोपायित । त्रि । रक्षिते ॥ गोपाय्यते स्म । गुपू० । क्त । आयादयआर्द्धधातुकेवा ॥

गोपाल । पु । नृपे । भूपे ॥ गोपे । गवापालके ॥ ईशे ॥ श्रीकृष्णे ॥ तन्नाम यथा । -अथाद्यस्याकोपनीशाम्बु-

अरूचि रक्षणाम्भोजनेत्रो ऽम्बुजस्थो बालो जङ्घाकटीरस्थलकलितरणत्किङ्किणीको मुकुन्द । दोर्भ्यां हैयङ्गवीनं दधद ऽतिविमलं पायसं विश्ववन्द्यो गोगोपीगोपवीतो रुरुनखविलसत्कण्ठभूष श्चिरं व इतितन्त्रसार' ॥ सर्वस्य जगतः पालनात् । विष्णौ ॥ गां भूमिं वेदं तन्मूलं यज्ञादिकं वा । पालयति । गा. पालयतिवा । पालरक्षणे । कर्मण्यण् ॥ डगणे । मध्यगुरौ । ऽ । ॥

गोपालक' । पु । शिवे ॥ श्रीकृष्णे ॥ गवां पालके ॥ गोपालएव । स्वार्थे कन् ॥

गोपालकर्कटी । स्त्री । ग्वालकाकडी इति प्रसिद्धे कर्कटी प्रभेदे । क्षुद्रैर्वारौ । क्षुद्रचिर्भिटायाम् ॥

गोपालिका । स्त्री । गोपालकस्त्रियाम् ॥ अपपुयोगलक्षणोङीष्प्राप्त. पालकान्तान्नेति निषिध्यते ॥ कीटविशेषे । महाभीरौ ॥ शारिवाया भेषधौ ॥

गोपाली । स्त्री । गोपालकर्कट्याम् ॥ गोरक्ष्याम् ॥ गोप्याम् ॥ गोपाली करतालीनर्त्तनशाली पुनातुवनमाली ॥

गोपाष्टमी । स्त्री । गोष्ठाष्टम्याम् ॥ यथा । शुक्लाष्टीकार्त्तिकेतु स्मृता गोपाष्ट

मी बुधे । तद्दिने वासुदेवोऽभूद् गोप्य पूर्वन्तु वत्सप ॥ तत्र कुर्याद् गवां पूजा गोग्रास गोप्रदक्षिणम् । गवानुगमन कार्यं सर्वान् कामान ऽभीप्सता ॥

गोपिका । स्त्री । गोपस्त्र्याम् ॥ गोपायति । गुपू॰ । ण्वुल् ॥ गोप्याम् ॥

गोपित्तम् । न । गोरोचनायाम् ॥

गोपिनी । स्त्री । श्यामालतायम् ॥

गोपी । स्त्री । गोपस्त्रनार्याम् ॥ गोपस्य स्त्रीत्यर्थे पुंयोगादाख्यायामिति ङीष् ॥ शारिवायाम् ॥ रक्तिकायाम् ॥ रक्षिकायाम् । मूलप्रकृतौ ॥ गोपायति । गुपू॰ । आयाभावे । पचाद्यच् । गौरादिङीष्॰ ॥

गोपीथ । पु । न । रक्षणे ॥ न । तीर्थे ॥ जलद्रोण्याम् ॥ गावः पिबन्त्यस्मिन् । पा॰ । निशीथगोपीथावगथादृतिथक् ॥ गोपीथ.सोमपानमिति वेदभाष्यम् ॥

गोपुच्छ । पु । हारविशेषे ॥ गोलाङ्गूले ॥ गोलाङ्गूलवानरे ॥

गोपुटा । स्त्री । स्थूलैलायाम् ॥

गोपुटिकम् । न । शिववृषस्यमस्तके ॥

गोपुरम् । न । पुरद्वारे ॥ द्वारमात्रे ॥ कैवर्त्तीमुस्तके ॥ गां जलं पिपर्त्ति । पृपालनपूरणयो । मू॰ क.॥ गौर्जल पुरमस्येतिवा ॥ यद्वा । पुरति । पुर अग्रगमने । इगुपधेति क. । गवापुरम् ॥ गोपायति वा । गुपू॰ । बाहुलकादुरच् ॥ यद्वा । गोप्यते । गुलमहत्त्वे । इगुपधत्वात् क । रलयोरभेद. गोभि पुरम् ॥ गा पुरतिवा । पुर॰ । मू॰ कोवा ॥

गोपुरक । पु । कुन्दुरुके । बहुगन्धे॥

गोपुरीषम् । न । गोमये ॥

गोपेन्द्र । पु । विष्णौ ॥ गोपराजे ॥

गोपेश । पु । शाक्यमुनौ ॥ गोपराजे ॥ नन्दघोषे ॥

गोप्ता । त्रि । रक्षके ॥ गोपायति । गुपू॰ । तृच् ॥ श्रीकृष्णे ॥ सर्चिस्वमायया स्वात्मान संवृणोति ॥

गोप्त्री । स्त्री । गोपिकायाम् ॥ रक्षिकायाम् ॥

गोप्यः । पु । दासीपुत्रे ॥ त्रि । रक्षणीये ॥ गुह्ये ॥ सङ्गोपनीये ॥ यथा । आयु र्वित्तं गृहच्छिद्र मन्त्रमैथुन भेषजम् । अपमान तपो दान नव गोप्यानि यत्नत इति ॥ गुप्यते । गुपू॰ । ऋदुपधोण्यत् ॥

गोप्यक. । पु । दासे ॥ गोप्यात् स्वार्थे क. ॥ गोप्य कायति वा । कै॰ । आतश्चेतिक

गोप्याधि । पु । बन्धकविशेषे ॥ तथा च नारदः । अधिक्रियत इत्याधि.

स विशेषो द्विलक्षणः । भूतकालो ऽपनेयश्च धारयेवोपत आधा ॥ स पुनर्द्विविध प्रोक्तो गोप्यो भोग्यस्त थैवच । गोप्योरक्षणीयः ॥

गोवाणी । स्त्री । ओषधिविशेषे ॥ पा ककर्णेतिङीष् ॥

गोभण्डीर' । पु । जलकुक्कुभखगे ॥

गोमक्षिका । स्त्री । मक्षिकाविशेषे । दंशे । डाँस इतिभाषा ॥

गोमान् । त्रि । गवीश्वरे । गोमिनि ॥ मत्वेगावो ऽस्य । भूम्नि तदस्यास्ती तिमतुप् ॥

गोमतम् । न । गव्यूतौ ॥

गोमतल्लिका । स्त्री । प्रशस्तायांगवि ॥ प्रशसावचनैश्चेति नित्यसमासः ॥

गोमती । स्त्री । स्वनामख्यातायांनद्या म् । वाशिष्ठ्याम् ॥ वैदिकमन्त्रवि शेषे ॥ उगितश्चेतिङीप् ॥

गोमन्तः । पु । विन्ध्यप्रत्यन्तपर्वते ॥

गोमय । पु । न । गोविष्ठि ॥ गो.पुरी षम् । गोश्चपुरीषे इतिमयट् ॥ अ त्यन्तजीर्णदेहाया वन्ध्यायाश्च विशे षत । रोगार्त्ताया. प्रसूताया न गो गोमयमाहरेत् ॥

गोमयच्छत्रम् । न । शिलीन्ध्रके ॥

गोमयच्छत्रिका । स्त्री । उच्छिलीन्ध्रे । शिलीन्ध्रे । छिलीरे ॥

गोमयप्रियम् । न । भूतृणे ॥

गोमयोत्था । स्त्री । गोमयजातकीट विशेषे । गर्दभ्याम् । गोवरीला इति भाषा ॥

गोमायु । पु । शृगाले ॥ गन्धर्वविशेषे ॥ गां भिकृतांवाचं मिनोति । डुमि ञ्० । कृत्रापेत्यु ॥

गोमी । पुं । शृगाले ॥ वृद्धभिक्षुशिष्ये । आमलेरे ॥ चि । गोमति ॥ उपा सके ॥

गोमीनः । पु । मत्स्यविशेषे ॥

गोमुख' । पु । मातलिपुत्रे ॥ अशादे वगणान्तरे ॥ नक्रे ॥ यक्षविशेषे ॥ न । कुटिलागारे ॥ वाद्यभाण्डे ॥ ले पने ॥ चौरंक्रियमाणे सुरङ्गाया' प्र भेदे ॥ जपमालागोपनाय पट्टवस्त्रा दिनिर्मिते गोमुखी इति प्रसिद्धे य न्त्रविशेषे ॥ यथा । चतुर्विंशाङ्गुल मित पट्टवस्त्रादिसम्भवम् । निर्मा या ऽष्टाङ्गुलिमुख ग्रीवां तत् षडङ्ग ङ्गुलम् ॥ चेयं गोमुखयन्त्रञ्च सर्व तन्त्रेषुगोपितम् । तन्मुखे स्थापये न्मालां ग्रीवामध्यगत' कर ॥ प्रजपे द्विधिनागुह्यंवर्णमालाधिकंप्रिये । इ ति मुण्डमालातन्त्रम् ॥ गोमुखादे ततोमालां गोपयेन्मातृजारवत् । इति भयातन्त्रम् ॥

गोमुखी । स्त्री । मन्त्रजपार्थकर्पटादिनिर्मितगुप्तिकायाम् । गोमुखे ॥ राढदेशस्थनदीविशेषे ॥

गोमूत्रम् । न । गोः जले ॥ अस्य गुणाः । गोमूत्रं कटु तीक्ष्णोष्णं क्षारं तिक्तकषायकम् । लघ्वग्निदीपनं मेध्यं पित्तकृत् कफवातहृत् ॥ शूलगुल्मोदरानाहकण्डूक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक् कुष्ठनाशनम् ॥ कासश्वासापहं शोथकामलापाण्डुरोगहृत् ॥ * ॥ कण्डूकिलासगदशूलमुखाक्षिरोगान् गुल्मातिसारमरुदामयमूत्ररोधान् । कासं सकुष्ठजठरकृमिपाण्डुरोगान् गोमूत्रमेकमपि पीतमपाकरोति ॥ सर्वेष्वपि च मूत्रेषु गोमूत्रं गुणतोऽधिकम् । अतो विशेषाकथने मूत्रं गोमूत्रमुच्यते ॥ प्लीहोदरश्वासकासशोथवर्चोग्रहापहम् । शूलगुल्मरुजानाहकामलापाण्डुरोगनुत् ॥ कषायं तिक्ततीक्ष्णञ्च पूरणात् कर्णशूलहृत् ॥

गोमूत्रिका । स्त्री । तृणविशेषे । चोचजायाम् । रक्ततृणायाम् ॥ चित्रकाव्यविशेषे । यथा । गतिक्रमावक्रा यत्र मार्गे मूत्रस्य गोरिव । गोमूत्रिकेति तत् प्राहुर्दुष्कराश्चित्रवेदिनः ॥ अपिच । वर्णानामेकरूपत्वं यद्येकान्तरमर्द्धयोः । गोमूत्रिकेति तत् प्राहुर्दुष्करं तद्विदो विदुरिति ॥ षोडशकोष्ठद्वये पङ्क्तिद्वये ऽर्द्धद्वयं क्रमेण विलिख्यैकान्तरविनिमयेन वाचने श्लोकनिष्पत्तिर्भवतीत्युद्धारः ॥

उदाहरणं यथा ॥

| प्र | वृ | त्ते | वि | ता | स | द्रा | नं | सा | ध | ने | प्य | त्रि | षा | द्वि | भि । |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| व | द्ध | धि | वि | का | स | द्धा | न | यु | ध | ना | प्य | नि | षा | षि | भि ॥ |

इति माघे १९ सर्गे ४६ श्लोकः ॥ अस्याश्चत्वारो भेदाः । पादगोमूत्रिका अर्द्धगोमूत्रिका श्लोकगोमूत्रिका विपरीतगोमूत्रिकेति भेदा इति सरस्वतीकण्ठाभरणम् ॥

गोमेदः । पुं । गोमेदकमणौ ॥ द्वीपविशेषे ॥ यथा । गोमेदे गोपतिर्मोम राजा भूत्वासवोद्यत । याज्योऽभूद्वह्निकल्पानां मैतथ्यानां मनोः कुले ॥ स तेषु हरियज्ञाय प्रवृत्तेषु भृगून् गुरून् । वव्रे न गौतमं कोपादशपत् सोऽगमत् क्षयम् ॥ यज्ञवाटेऽस्य ता गावो दग्धा कोपाग्निना मुनेः । तन्मेदसा मही छन्ना

गोमेद सततोऽभवदिति ॥

गोमेदक । पु । स्वनाम्ना प्रसिद्धे मणि विशेषे ॥ न । पीतमणौ ॥ राहुरत्ने । तन्नामणौ ॥ अस्यपरीक्षा यथा । हिमालयेवा सिन्धौवा गोमेदमणिसम्भव । स्वच्छकान्ति गुरु स्निग्धो वर्णाढ्यो दीप्तिमानपि ॥ वक्ष्च पिञ्जरो धन्यो गोमेदइतिकीर्त्तित । चतुर्द्धा जातिभेदस्तु गोमेदेपि प्रकाश्यते ॥ ब्राह्मण शुक्लवर्णः स्यात् क्षत्रियोरक्तउच्यते । आपीतोवैश्यजातिस्तु शूद्रस्त्वानीलउच्यते ॥ छाया चतुर्विधा श्वेता रक्ता पीता ऽसिता तथा ॥ गुरुप्रभाढ्य सितवर्णरूप स्निग्धो मृदुर्वातिमहापुरोण ॥ स्वच्छस्तु गोमेदमणि धं तोय करोति लक्ष्मी धनधान्य वृद्धिम् । लघु विरूपो ऽतिखरोऽन्यमान स्नेहोपलिप्तो मलिन खरोपि ॥ करोति गोमेदमणि विनाश सम्पत्तिभोगावलवीर्य्यराशे ॥ ये दोषा हीरके ज्ञेया स्ते गोमेदमणावपि । परीक्षा वज्रित कार्या शाणेवा रत्नकोविदै ॥ स्फटिकेनैवकुर्वन्ति गोमेदप्रतिरूपिणम । शुद्धस्य गोमेदमणेस्तु मूल्यं सुवर्णतो द्वैगुणमाहुरेके । अन्येतथा विद्रुमतुल्यमूल्यं तथा परेक्षामरतुल्य माहु ॥ चतुर्विधानामेषातु धार्य्यं परिसम्भतमिति ॥ काकोले ॥ पद्मके ॥

गोमेदसन्निभ । पुं । दुग्धपाषाणे ॥

गोमेध । पु । यज्ञविशेषे ॥ तस्य कलौनिषेधो यथा । अश्वालम्भ गवालम्भ सन्न्यासंपलपैतृकम् । देवराच्च सुतोत्पत्ति कलौपञ्चविवर्जयेत् ॥

गोयुगम् । न । गोद्वये ॥ गवोर्युगम् ॥

गोरक्ष । पु । नागरङ्गे । नारङ्गे ॥ ऋषभनामौषधौ ॥ त्रि । गोरक्षके । गोपे ॥ रक्षतीतिरक्ष । गो रक्ष ॥

गोक्षकर्क्कटी । स्त्री । चिर्भिटायाम् ॥

गोरक्षजम्बू । स्त्री । गोधूमे ॥ गोरक्षतण्डुलायाम् ॥ घोण्टाफले ॥

गोरक्षतण्डुला । स्त्री । गोरक्षचाउलिया इति गौडभाषाप्रसिद्धे क्षुद्रलता विशेषे । गाङ्गेरुक्याम् । नागबलायाम् ॥

गोरक्षतुम्बी । स्त्री । कुम्भतुम्ब्याम् ॥

गोरक्षदुग्धा । स्त्री । क्षुद्रक्षुपविशेषे । ताम्रदुग्धायाम् । बहुपत्रायाम् । अमृतसञ्जीवन्याम् ॥

गोरक्षी । स्त्री । क्षुद्रक्षुपविशेषे । गन्धबहुलायाम् । पञ्चपर्णिकायाम् ॥ गोरक्षदुग्धायाम् ॥ कुम्भतुम्ब्याम् ॥

गोरक्ष्यम् । न । पाशुपाल्ये ॥ गोरक्षतो

ति गोरत्त । सम्बनावत्न्यप् ॥

गोरङ्कु । पु । पक्षिविशेषे ॥ नग्नके ॥ वन्दिनि ॥

गोरट । पु । दुर्खदिरे ॥

गोरणम् । न । गुरणे । उद्यमे । भारा युद्यमने ॥ गूर उद्यमे । चु० । ल्युट् ॥

गोरस । पु । दुग्धे ॥ दधि ॥ दुग्धा नते । घोले । तक्र ॥ गोरसस्य दुग्धस्य विकारत्वात् उपचारात् ॥

गोरसजम् । न । तक्रे ॥

गोराटी । स्त्री ।
गोराटिका । स्त्री । } शारिकाविहगे ॥
गोरिका । स्त्री ।

गोरुतम् । न । क्रोशयुग्मे ॥ गो'शब्दे ॥

गोरोचम् । न । हरिताले ॥

गोरोचना । स्त्री । स्वनामख्यातपीत वर्णद्रव्ये । शोभनायाम् । मङ्गलाया म् । मेध्यायाम् ॥ गोरोचनाक्षिमा तिलका वश्या मङ्गलकान्तिदा । विषा ऽलक्ष्मीग्रहोन्मादगर्भस्रावक्षतास्त्र कृत् ॥

गोर्दम् । न । मस्तिष्के । मस्तकमध्ये स्नेहे ॥ गुर्यते गुरतेवा । गुरी उद्यम ने । बाहुल्यादय इतिसाधु ॥

गोल । पु । सर्ववर्तुले ॥ मदनवृक्षे ॥ जारात् विधवासुते ॥ भूगोले ॥ खगोले ॥ यथा । शोल शोलु वहि तव

मति भास्करीय शृणु त्वमिति श्रि रोमणि ॥ एकराशौ षड्ग्रहयोगे ॥ यथा । षड्भा मेकस्मिन् यदि भव ति यस्यां निवसति सदा गोलोये। ग प्रलयपद मिन्द्रोपि लभते भ वे लोको रक्त परिहरति पुत्रञ्च जननी नृपाद्यां न श. स्तान्ज्वल ति वसुधा शुष्यतिनदीति ॥ एकरा शौ सप्तग्रहयोगे ॥ यथा । सप्तग्रहा यदैकस्था गोलयोग सदा भवेत् । दुर्भिक्ष राष्ट्रपीडाच तस्मिन् काले नृपक्षय इति ॥ न । मण्डले ॥ गुडे च । डलयोरभेद ॥

गोलक । पु । जारतोविधवासुते ॥ म णिके । अलिञ्जरे । गोल इतिमाट इ तिचभाषा ॥ गुडे ॥ पिण्डे ॥ यथा । ते जसा गोलक सूर्यग्रहर्क्षाण्यम्बुगो लका. । प्रभावन्तो हि दृश्यन्ते सूर्य रश्मिविदीपिता ॥ इतिसूर्यसिद्धान्त ॥ गन्धरसे । बोले ॥ न । गोलोके ॥ गुड्यते । गुडरक्षायाम् । घञ् । स्वा र्थेकन् । डलयोरैक्यम् ॥

गोलक्षणम् । न । गवा प्रशस्ताप्रशस्त स्वरूपे ॥ यथा । पराशर प्राह वृ-हद्रथाय गोलक्षणं तत् क्रियते ततो ऽयम् । गवा समास' शुभलक्षणा-स्ता सर्वा स्तथा व्यागमतो ऽभिधा

गोलक्ष

स्ये ॥ अशुभलक्षणा गावश्चाह । सा
स्नाविवर्ज्जिताक्ष्यो मूषिकनयनाश्च
न शुभा गाव. । प्रचला श्चिपिटवि-
षाणा करटा खरसदृशवर्णा श्च ॥
दशसप्तचतुर्दन्त्यः प्रलम्बमुण्डानना
विनतपृष्ठा । ह्रस्वस्थूलग्रीवायवम-
ध्या दारित खुराश्च ॥ श्यावातिदी
र्घजिह्वा गुल्फै रतितनुभि रति
दृहद्भिर्वा । अतिककुदा' कृषदेहा
नेष्टा हीनाधिकाङ्ग्यश्च ॥ ४ ॥ अथ
वृषलक्षणम् । वृषभोऽप्येवंस्थूलातिख
ञ्जवृषणा' सिराततक्रोड । स्थूलसि
राचितगण्ड स्त्रिस्थूलं मेहतेयश्च ॥
मार्जाराक्ष कपिल: करटो वा न
शुभदो द्विजस्यैव । कृष्णोष्ठताल्वुजि
ह्व श्वसनो यूथस्य घातकर: ॥ ६ ॥
स्थूलशकृन्मणिशृङ्ग सितोदर: कृष्ण
सारवर्णश्च । गृहजातोऽपि त्याज्यो
यूथविनाशावहो वृषभ' ॥ ७ ॥ श्या
मक पुष्पचिताङ्गो भस्मारुणसन्निभो
बिडालाक्ष: । विप्राणा मपि न शु
भंकरोति वृषभ' परिगृहीत: ॥ ये
चोद्धरन्ति पादान् पङ्कादिव योजि
ता. कृशग्रीवा: । कातरनयना ही
नाश्च पृष्ठत स्ते न भारसहा: ॥ ९ ॥ अ
थशुभलक्षणसहितानाह । मृदुसंह
तताम्रोष्ठा तनुस्फिज ताम्रतालुजि

ह्वाश्च । ह्रस्वतनूच्चश्रवणा: सुकुक्षय:
स्पृष्टजङ्घाश्च ॥ आताम्रसंहतखुरा व्यू
ढोरस्का दृहत्ककुदयुक्ता । स्निग्धश्ल
क्ष्णतनुत्वग्रोमाण स्ताम्रतनुशृङ्गा: ॥
तनुभूस्पृग्वालधयो रक्तान्तविलोच
ना महोच्छ्वासा: । सिंहस्कन्धा स्त
न्वल्पकम्बला' पूजिता' सुगता: ॥
११ ॥ वामावर्त्तैर्वामे दक्षिणपार्श्वे
च दक्षिणावर्त्तै । शुभदा भवन्त्यन
डुहो जङ्घाभिश्चैणकनिभाभि' ॥ वै
दूर्यमल्लिकाबुद्बुदेक्षणा: स्थूलनेत्र
वर्त्मान' । पार्ष्णिभि रस्फुटिताभि: श
स्ता. सर्वे च भारसहा' ॥ घ्राणोद्दे
शे सवलि मार्जारमुख' सितश्च द
क्षिणत: । कमलोत्पललाक्षाभ' सु
वालधि र्वाजितुल्यजव' ॥ लम्बै र्वृ
षै र्मेषोदरैश्च सङ्क्षिप्तवङ्क्षणक्रोड:
। ज्ञेयो भाराध्वसहो जवेऽश्वतुल्य
श्च शस्तफल: ॥ १५ ॥ सितवर्ण' पिङ्गा
क्ष स्ताम्रविषाणेक्षणो महावक्त्र: । हं
सो नामशुभफलो यूथस्य विवर्द्धन
प्रोक्त ॥ १६ ॥ भूस्पृग्वालधि राता
म्रविषाणो रक्तदृक् ककुद्मांश्च । क
ल्माष श्चस्वामिन मचिरात् कुरु
ते पतिं लक्ष्म्या' ॥ १७ ॥ यो वा सि
ते क्ष्च चरणे र्यथेष्टवर्णश्च सोपि शु
भफलकृत् । मिश्रफलोऽपि त्याज्यो

यदिनैकान्तप्रसक्तोऽपि ॥ १८ ॥
इतिवाराहीसंहितायां गोलचलना
माहप्रभ्वाग्रोऽध्याय ॥ ५८॥

गोला । स्त्री । गोदावर्याम् ॥ सख्याम्
॥ कुनव्याम् ॥ दुर्गायाम् ॥ मनःशिले
॥ मण्डले ॥ अलिञ्जरे ॥ वालखेल
ने । वालक्रीडनकाष्ठे ॥ गां ददाति
लाति । ला० । आतइति क ॥ गु
ड्यते वा । गुडवेष्टने । घञ् । डल
योरैक्यम् ॥

गोलाङ्गूल । पु । असितमुखे कपिवि
शेषे । कपित्थास्ये । दधिशोणे ॥ क्रू
ष्णवानरे ॥

गोलास' । पु । शिलीन्ध्रे ॥

गोलिह । पु । घण्टापाटलौ ॥

गोलीढ । पु । लोध्रविशेषे । घण्टा
पाटलौ ॥ गोभिर्लिह्यतेस्म । लि
ह० । क्त' ॥

गोलोक । पु । न । श्रीकृष्णस्य निवासे
धामनि ॥ श्रीकृष्णस्थाने ॥ यथा ।
वैकुण्ठस्य दक्षभागेगोलोक सर्वमो
हनम् । तत्रैव राधिका देवी द्विभु
जो मुरलीधर' ॥ यद्रूपगोलकं धाम
तद्रूपं नास्ति भामके । श्रानेवा च
क्षुषो' किं वा ध्यानयोगे न विद्यते
॥ अद्भुतत्स्वमयं देवि नानादेवेन शो
भितम् । मध्यदेशे गोलकाख्य श्रीवि
ष्णो र्धाममन्दिरम् ॥ श्रीविष्णोः स
स्वरूपस्य यत्स्थानं चित्तमोहनम् ।
तत्स्थानस्य माहात्म्यं किमया कथ्य
तेऽधुनेत्यादि माहात्म्यादिकं तत्र
शास्त्रे ब्रह्मवैवर्त्तपुराणेच द्रष्टव्यम्॥

गोलोमिका । स्त्री । गोधुमा इति पा-
षदी इतिच गौडभाषाप्रसिद्धे क्षुद्र
क्षुपविशेषे । क्रोष्टुकपुच्छिकायाम् ।
प्रस्तारिण्याम् ॥

गोलोमी । स्त्री । श्वेतदूर्वायाम् ॥ गो
लोमस्व जाता । तत्रजातइत्यण् ॥
वचायाम् ॥ भूतकेशे ॥ गोलोमाभि
यम् । तस्येदमित्यण् । संज्ञापूर्वकत्वा
न्नवृद्धिः ॥ वेश्यायाम् ॥ गोलोमा-
ख्या । गोशब्दोगोलोमसदृशेलाक्ष-
णिक' । अनउपधालोपिन इति ङी
प् ॥ गोलोमिकायाम् ॥

गोवत्सादी । पु । वृके ॥

गोवन्दनी । स्त्री । प्रियङ्गौ । फलिन्या
म् ॥ गविभूमौवन्द्यते । वदि० । कर्म
णिल्युट ॥ पीतदण्डोत्पले ॥

गोवरम् । न । गोमयविशेषे ॥ गोष्ठा
न्त गोखुरक्षुण्ण शुष्कचूर्णितगोमय
म् । गोवर तत् समाख्यातं वरिष्ठं
रससाधने ॥

गोवर्द्धन । पु । स्वनाम्ना प्रसिद्धे पर्वत
विशेषे । गिरिराजे ॥ वनाद्विः हरिं

हाथोऽयंभूधरो नाम संशय । शुक्ल प्रतिपदि प्रात कार्त्तिके ऽर्च्यो ऽन्नवे- श्मवै ॥ पूजामन्त्रस्तु । गोवर्द्धनध राधारगोकुलत्राणकारक । विष्णु बाहुकृतोच्छ्रायोगवा कोटिप्रदोभ वेति ॥ चि । गोवर्द्धके ॥ गवा वर्द्धन ॥

गोवर्द्धनधर । पु । श्रीकृष्णे । नन्दनन्द ने ॥ गोवर्द्धनस्य गिरे धरो धारक ॥

गोवर्द्धनधारी । पु । श्रीकृष्णे । यशोदा नन्दने ॥

गोवशा । स्त्री । वन्ध्यायाङ्गवि ॥

गोविन्द । पुं । वासुदेवे ॥ तद्ध्यानयथा । फुल्लेन्दीवरकान्त मिन्दुवदन वर्हा वतंसप्रिय श्रीवत्साङ्कमुदारकौस्तु भधर पीताम्बर सुन्दरम् । गोपीना नयनोत्पलार्चिततनु गोगोपसङ्घा वृतंगोविन्द कलवेणुवादनपर दिव्या ङ्गभूषभजेइति ॥ गोशब्दवाच्यानि इ न्द्रियाणि निष्पर्शं प्राप्ते ॥ गांवेदलक्ष णां वाणीं विन्दति इति व्युत्पत्त्या सर्ववेदोपादानत्वेन सर्वज्ञे ॥ गा भुवं धेनुं स्वर्गं वेद वा अविदत् वि न्दति वा । विद॰ विन्दत्॰ । गवादि षु विन्दे.संज्ञायामितिश । वाराहरू पेणोद्धरणात् कामधेनोरैश्वर्यप्राप्ते । इन्द्रेणस्वर्गस्य निवेदनात् मत्स्यादि रूपेण वेदोद्धरणाद्वा ॥ गोभिर्वाणी भि र्वेदान्तवाक्यैर्विन्दते वा । गोभि रेव यतो वेद्यो गोविन्द समुदा हृत इति विष्णुतिलकम् ॥ वह्निपु राणेयमानुशासनेतन्नाममाहात्म्य यथा । येतिष्ठन्त स्वपन्तश्च गच्छन्त स्खलिते क्षुते । सङ्कीर्त्तयन्ति गोविन्द ते वस्याज्ञ्या सुदूरतइति ॥ गवाध्यक्षे ॥ वृहस्पतो ॥

गोविन्दद्वादशी । स्त्री । फाल्गुनशुक्लद्वा दश्याम् ॥

गोविट् । पु । गोमये ॥ गोर्विट् ॥

गोविष्ठा । स्त्री । गोमये ॥ वनोपले ॥ गोर्विष्ठा ॥

गोवीथी । स्त्री । मध्यममार्गे नक्षत्र विशेषाणां संज्ञाविशेषे ॥ यथा । ऊ स्वश्विश्वातथास्वातीगोवीथीतितुश्र श्वितेति ॥

गोवृन्दम् । न । गोसमूहे ॥

गोशकृत् । न । गोमये ॥

गोशरण्य । पु । ग्रामादितो दुर्गाश्च गो परित्राणकारके ॥ गो गैर्ग वा शरण्य ॥

गोशालम् । न । गोगृहे ॥ गवांशाला । विभाषासेनेति षाक्षिक क्लीवत्वम् ॥ चि । गोशाले जाते ॥ स्थानान्तगो शालेतिजातार्थप्रत्ययस्य लुक् ॥

गोशाला । स्त्री । गोशाले । गौसाला

इतिभाषा ॥ गवांशाला ॥

गोशीर्षम् । न । चन्दने ॥ चन्दनविशेषे । हरिचन्दने ॥ गोशीर्षाकारेमलये कदेशेजाते कालताम्रव्यामिश्रवर्णो उत्पलगन्धिनि अतिसुरभिशीतलतया सदैव सर्पैर्वेष्टिते इति व्याख्यातार ॥ गो शीर्षमिवगोशीर्षोगिरिस्तत्राकार इति स्वामी ॥ गवांमस्तके ॥

गोशीर्षक । पु । द्रोणपुष्पीवृक्षे ॥ कपभाद्रिसमुद्भवे गोरोचनासदृशवर्णे चन्दनजातिविशेषे ॥ गोमस्तके ॥

गोशृङ्ग । पु । बर्बुरवृक्षे ॥ न । गोर्विषाणे ॥

गोश्रुति । पु । वैयाघ्रपद्येऋषिविशेषे ॥

गोष्ठम् । न । गवांस्थाने ॥ गावस्तिष्ठन्त्यत्र । छा० । घजर्थे इति सुपिस्थ इति वा क । अम्बाम्बेतिषत्वम् ॥ पिदृधिष्ठिताहङ्कारे ॥ गाव ओचादीनीन्द्रियाणि तिष्ठन्त्यत्रेति पूर्ववत् प्रक्रिया ॥ गोष्ठीश्राद्धे ॥

गोष्ठपति । पु गवांस्थानाध्यक्षे ॥

गोष्ठश्व । पु । परच्छिद्रके । य स्वगृहाद्गनेस्थित परान्द्वेष्टितस्मिन् ॥ गोष्ठेश्वा इति सप्तमीतत्पुरुषे अचतुरेत्यादिना ऽच् । मत्ताद्वितइतिटिलोप ॥ षष्ठीतत्पुरुषेतु गोष्ठश्वाइत्येव ॥

गोष्ठाष्टमी । स्त्री । गोपाष्टम्याम् ॥

गोष्ठी । स्त्री । सभायाम् । परिषदि ॥ सलापे ॥ पोष्यवर्गे ॥ विष गोष्ठी दरिद्रस्य ॥ गावो ऽनेकावाच स्तिष्ठन्त्यस्याम् । घजर्थेक । अम्बाम्बगोभूमीतिषत्वम् । गौरादित्वान् ङीष ॥

गोष्ठीपति । पु । पोष्यवर्गाभिपालके ॥ सभापतौ ॥

गोष्ठीभेद । पु । क्रीडाविशेषे ॥

गोष्पदम् । न । गोखुरश्वभ्रे ॥ त्रि । गवां गतिगोचरे ॥ गोपद प्रमाणे ॥ गो पदम् । गाव पद्यन्ते यस्मिन् देशे स गोभि सेवितो गोष्पद । गोष्पदसेवितासेवितप्रमाणेष्वितिसुट् सत्वषत्वञ्चनिपात्यते । असेविते अगोष्पदान्यरण्यानि । प्रमाणे गोष्पदमात्र वृष्टम् ॥

गोस । पु । बोले ॥ उष काले । विभाते ॥ गांजल स्यति । षोऽन्तकर्मणि । आत इतिक ॥

गोसङ्ख्य । पु । गोपे ॥ गाव सञ्चष्टे । चक्षिङ् । चक्षिङ ख्याञ । समिख्य इतिकः ॥

गोसदृक्ष' । पु । गवये ॥

गोसन्दाय । पु । गोदानकर्त्तरि ॥

गोसम्भवा । स्त्री । श्वेतदूर्वायाम् ॥ त्रि ।

गोर्जाते ॥

गोसर्गः । पु । प्रभाते ॥

गोसव । पु । गोमेधयज्ञे ॥

गोस्तन । पु । चतुर्यष्टिकहारे ॥ गो। कुचे ॥

गोस्तनी । स्त्री । कपिलद्राक्षायाम् । द्राक्षायाम् । मनक्कादाख इतिभाषा ॥ गौ स्तनोऽस्या । गोस्तनसदृशे गाशब्दो गौण । स्वाङ्गाच्चोपसर्जनादिति ङीष् ॥

गोस्थानम् । न । गोष्ठे ॥ गवास्थानम् ॥

गोस्थानकम् । न । गोष्ठे ॥ स्वार्थेकः ॥

गोस्वामी । त्रि । गोपतौ ॥

गोहनम् । न । गोमये ॥

गोहरीतकी । स्त्री । बिल्वे ॥

गोहालिया । स्त्री । गोवालिया इति ख्याते लताविशेषे ॥

गोहित । पु । घोषलतायाम् ॥ बिल्वे ॥ श्रीकृष्णे ॥ गवा हितार्थं गोवर्द्धनगिरिं धृतवान् इतिगोभ्योहित. । चतुर्थीतदर्थे त्यादिना चतुर्थी तत् पुरुष । गोर्भूमे भीरावतरणेच्छया शरीर ग्रहणंकुर्वन् वा हित. ॥ त्रि । गवा हितकारके । गोग्रासादकर्त्तरि ॥

गोहिरम् । न । पादमूले ॥

गौच्यः । पु । मेनासुते । मैनाके ॥ गौ

च्या हिमालयपत्न्या. अपत्यम् । स्त्रीभ्योढगिति ढकिप्राप्ते छन्दसि व्यत्ययो बहुलमिति व्यत्ययेन गर्गादिभ्योयञिति यञ् ॥

गौञ्जिक । पु । स्वर्णकारे ॥ गुञ्जायव हर्त्तरि ॥

गौड. । पु । देशविशेषे ॥ तद्देशसीमा यथा । वङ्गदेशं समारभ्य भुवनेशान्तग शिवे । गौडदेश समाख्यात. सर्वविद्याविशारद. ॥ तद्देशस्थे पुंभूम्नि गौडा ॥ तेच पञ्चोक्ता स्कान्दपुराणे । सारस्वता कान्यकुब्जाः गौड मैथिलकौत्कला । पञ्चगौडा इति ख्याता विन्ध्यस्योत्तरवासिन. इति ॥

गौडवास्तुक. । पु । न । वास्तूक प्रभेदे ॥ तदेवतुवृहत् पत्र रक्त स्याद्गौडवास्तुकम् ॥

गौडिक । पु । इक्षुकुट्टके ॥ इक्षौ ॥ गुडेसाधु । गुडादिभ्यष्ठञ् ॥ न । म द्यविशेषे ॥

गौडी । स्त्री । सुराप्रभेदे । वाक्कल्याम् ॥ रागिणीविशेषे । मेघरागस्य योषिति ॥ काव्यरीतिप्रभेदे ॥ यथा । ओज प्रसादमाधुर्य गुणत्रितयभेदत । गौडवैदर्भपाञ्चालरीतय. परिकीर्त्तिता इति ॥

गौण. । त्रि । गुणयोगात्प्रवृत्ते ॥ अमु

स्वे ॥ सलोपपादितेर्थे ॥ गुणाद्यागत । अण् ॥

गौणधातु । पु । उपधातौ ॥

गौणसन्न्यासी । स्त्री । अग्यागिनि । कर्मफलत्यागिनि वेषिकस्मोभुशायिनि । रूपे ॥

गौणी । स्त्री । वृत्तिविशेषे ॥ अर्थोति प्रकारलक्षणान्तर्गतलक्षणाविशेषे ॥ पश्यात साहित्यदर्पणम् ॥

गौतम । पु । नचिकेतस. पितरिमुनिविशेषे । शरद्वान् गोत्रतो गौतम इति प्रसिद्धे ॥ मुनिविशेषे । शतानन्दे ॥ शाक्यवंशावतीर्णे बुद्धमुनिविशेषे । शाक्यसिंहे । शौद्धोदनौ ॥ कृपे ॥ गौतमस्यायंशिष्य' । तस्येदमित्यण् । तद्भावावतारादा ॥ गौतमस्यापत्ये । ऋष्यण् । बहुत्वे गोतमा ॥

गौतमसम्भवा । स्त्री । गोदावर्यो नद्याम् ॥

गौतमी । स्त्री । उमायाम् । दुर्गायाम् ॥ गोरोचनायाम् ॥ गोदावर्याम् ॥ कृप्याम् ॥ शाक्यलक्षणगौतमप्रणीतायां विद्यायाम् ॥ षोडशपदार्थप्रतिपादिकायामहल्यापतिगोतमप्रोक्तामकर्षविद्यायाम् ॥ शार्ङ्गरवावजेनेन् ॥ राक्षसीविशेषे ॥

गौत्तम । पुं । स्थावरविषस्य प्रभेदे ॥

गौधार । पु । गोधिकासुते । अन्यैर्गोधायाजाते चन्दनगोहेतिख्याते ॥ गोधाया अपत्यम् । आरगुदीचामिन्त्यारक् ॥

गौधूम । पुं । गोधूमविकारे ॥ गोधूमस्यावयवो विकारो वा । बिल्वाद्यण् ॥

गौधूमीनम् । न । गोधूमक्षेत्रे ॥ गोधूमानां भवनं क्षेत्रम् । धान्यानांभवनेक्षेत्रेखञ् ॥

गौधेय. । पु । गोधिकात्मजे । गौधेरे ॥ गोधाया अपत्यम् । शुभ्रादित्वाड्ढक् ॥

गौधेर । पु । गौधारे ॥ गोधायाः अपत्यम् । गोधाया ढ्रक् ॥

गौर । पुं । श्वेतसर्षपे ॥ चन्द्रे ॥ धववृक्षे ॥ अरुणवर्णे ॥ गौरा इतिख्याते पीतिवर्णे ॥ श्वेतवर्णे ॥ त्रि । तत्तद्वर्णवति ॥ विशुद्धे ॥ न । पद्मकेसरे ॥ कुङ्कुमे ॥ स्वर्णे ॥ गुरति गवते मनोऽत्र वा । गुरी उद्यमने गुङ्गतौ वा । ऋज्जेन्द्रेतिसाधु. ॥ गूर्यते ऽनेन वा । गुरी० । हलश्चेति घञ् । गौरएव । प्रज्ञाद्यण् ॥

गौरव्यम् । न । पाशुपाल्ये ॥

गौरजीरकः । पु । अजाज्याम् । श्वेतजीरके ॥

गौरतित्तिर । पुं । कपिञ्जले ॥
गौरत्वक । पु । इङ्गुदीवृक्षे ॥
गौरवम् । न । अभ्युत्थाने ॥ गुरुत्वे । लाघवाभावे ॥ गुरोर्भाव । इगन्ता च्चलघुपूर्वादित्यण् ॥
गौरवित । त्रि । आर्यमिश्रे ॥ गौरव सञ्जातोऽस्य । तारकादित्वादि तच् ॥
गौरशाक । पु । गिरजमधूके । अल्प पत्रे ॥
गौरसर्षप । पु । श्वेतसर्षपे । सिद्धार्थे ॥ गौरश्चासौसर्षपश्च ॥ त्रिभी राज सर्षपै परिमिते ॥
गौरसुवर्णम् । न । चित्रकूटप्रसिद्धे प त्रशाकप्रभेदे । वारिजे । गन्धशाके ॥
गौरा । स्त्री । गौर्याम् । शिवायाम् ॥ इतिद्विरूप ॥
गौराद्रक । पु । स्थावरविषविशेषे ॥
गौरास्य । पु । कृष्णवानरे ॥
गौरिका । स्त्री । अष्टवर्षायांकन्याया-म् ॥ गौर्येव । क. ॥
गौरिल । पु । सिद्धार्थे ॥ लौहचूर्णे ॥
गौरी । स्त्री । पार्वत्याम ॥ योगाग्नि दग्धदेहा या पुनर्जाता हिमालये । शङ्खेन्दुकुन्दधवला ततो गौरीतु सा स्मृता ॥ असञ्जातरज कन्यायाम् ॥ हरिद्रायाम् ॥ दारुहरिद्रायाम् ॥ गोरोचनायाम् ॥ प्रियङ्गुवृक्षे ॥ व-सुधायाम् ॥ नदीविशेषे ॥ वरुणभा र्यायाम् ॥ बुद्धशक्तिविशेषे । माया देव्याम् ॥ मञ्जिष्ठायाम् ॥ श्वेतदूर्वा याम ॥ मल्लिकायाम् ॥ तुलस्याम् ॥ सुवर्णकदल्याम् ॥ आकाशमांस्याम् ॥ रागिणी विशेषे । मालवरागभार्या याम् ॥ गौरवर्णान्वितायाम् ॥ गूयते । गुङ्शब्दे । ऋज्रेन्द्रेतिरन्तोगौ रोनिपातित । गौरोवर्णोऽस्यास्ता । गौरादित्वान् ङीष् ॥
गौरीगुरु । पुं । हिमवति ॥ गौर्या गुरु ॥
गौरीजम् । न । अभ्रके ॥
गौरीतक्रम् । न । तक्रविशेषे ॥ यथा । लवणं मरिचं विश्वं जीरं नार ङ्गजन्तथम् । एलाचूर्णान्वित तक्रं धूपयेद् घृतहिङ्गुना ॥ पार्वत्या वि हित तक्र सर्वदोषनिवर्हणम् । सुव र्णं पावन दिव्य मन्देशस्य मरुतप्रि यमिति ॥
गौरीपुत्र । पु । कार्त्तिकेये ॥ गणेशे ॥
गौरीपुष्प । पु । प्रियङ्गुवृक्षे ॥
गौरीललितम् । न । हरिताले ॥
गौरीशिखरम् । न । तीर्थविशेषे ॥
गौरीसुत । त्रि । दशवर्षोढात्मजे ॥
गौरुतल्पिक । पु । गुरुस्त्रीगामिनि ॥ गुरुतल्प गच्छति । गच्छतौ परदा

गादिभ्यः इति ठक् ॥

गौल्मिक । पु । मुष्ककवृक्षे ॥

गौल्यम् । न । मधुरे ॥

गौश्शतिक । त्रि । गोशतस्वामिनि ॥

गौष्ठीनम् । न । भूतपूर्वगोष्ठे ॥ पूर्वंभूत गोष्ठम् । गोष्ठात् खञ्भूतपूर्वे इतिखञ ॥ तीर्थविशेषे ॥

ग्रथित । त्रि । गुम्फिते । दृब्धे । कृत ग्रन्थने । गाँथा इतिगूथा इतिचभाषा ॥आक्रान्ते ॥ हते । हिंसिते॥ ग्रथ्यतेस्म । ग्रन्थसन्दर्भे । क्त

ग्रथितमाल । पु । वद्धपङ्क्तौ ॥

ग्रन्थ । पु । गुम्फे । ग्रन्थनायाम् ॥ धने ॥ शास्त्रे ॥ अक्षरसङ्ख्यायाम् । द्वात्रिंशद्वर्णनिर्मितौ । अनुष्टुप्श्लोके ॥ प्रबन्धे । विवक्षितार्थप्रतिपत्त्यनुकूलत्वे सति निबद्ध्यमानवाक्यसमुदाये । सन्दर्भे ॥ ग्रन्थनम् । ग्रन्थ० । घञ् ॥

ग्रन्थक । पु । द्वात्रिंशदक्षरान्विते अनुष्टुप्छन्द श्लोके ॥ सञ्ज्ञायांकन् ॥

ग्रन्थकर्त्ता । पु । ग्रन्थकारे ॥

ग्रन्थकुटी । स्त्री । लेखभूमौ । लेख्यस्थाने । दफतरखाना इति आफिस् इतिच इपरान्तजनभाषा ॥

ग्रन्थनम् । न । गुम्फने । ग्रन्थने । सन्दर्भे ॥

ग्रन्थना । स्त्री । ग्रन्थने ॥

ग्रन्थसन्धि । पु । काण्डे ॥ पटले ॥ स्थाने ॥ प्रकरणे ॥ पर्वणि ॥ अध्याये ॥ आह्निके ॥ उल्लासे ॥

ग्रन्थि । पु । ग्रन्थिपर्णे ॥ गाँठ इति भाषा प्रसिद्धे वस्त्रादिबन्धे ॥ वंशादिसन्धौ । पर्वणि । पोरी इति भाषा ॥ भद्रमुस्तायाम् ॥ हितावल्याम् ॥ पिण्डालौ ॥ कौटिल्ये ॥ अन्योन्याध्यासे ॥ मायाख्यपाशे ॥ रुग्भेदे ॥ ॥ तस्य निदानसम्प्राप्ती यथा । वातादयो मांसमसृक्प्रदुष्टा सन्दूष्य मेदश्च तथा शिराश्च वृत्तोन्नतं विग्रथितन्तु शोथ कुर्वन्त्यतो ग्रन्थिरिति प्रदिष्ट इति ॥ ग्रन्थते । ग्रथि० । सर्वधातुभ्यइन् ॥ खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिचरिभ्यश्चेति इर्वा । स्वरभेद ॥

ग्रन्थिक । पु । करीरे ॥ दैवज्ञे ॥ सहदेवपाण्डवे ॥ न । पिप्पलीमूले॥ ग्रन्थिपर्णे ॥ पु । न । गुग्गुलौ ॥ ग्रन्थिप्रतिकृति । इवेप्रतिकृताविति कन् ॥

ग्रन्थिका । स्त्री । पिप्पलीमूले ॥

ग्रन्थित । त्रि । ग्रथिते । गुम्फिते ॥ ॥ ग्रथ्यतेस्म । ग्रथि० । क्त ॥

ग्रन्थिदला । स्त्री । मालाकन्दे ॥

ग्रन्थिदूर्वा । स्त्री । मालादूर्वायाम् ॥
ग्रन्थिपर्ण । पु । चोरनामगन्धद्रव्ये ॥ न । बर्हिपुष्पे । कुक्कुरे । कुकुरौंदा इति ख्याते ॥ ग्रन्थिपर्णं तिक्ततीक्ष्णं कटूष्णं दीपनलघु । कफवातविषश्वासकण्डूदौर्गन्ध्यनाशनम् ॥ अस्यले पनगुण । स्नुषता ऽ लक्ष्मीराक्षसज्वरनाशित्वमिति ॥ ग्रन्थीपर्णोन्यस्य । ग्रन्थयइवपर्णान्यस्येतिवा ॥
ग्रन्थिपर्णी । स्त्री । जतुकालतायाम् ॥
ग्रन्थिपर्णी । स्त्री । गण्डदूर्वायाम् ॥
ग्रन्थिपाश । पु । ग्रन्थ्यात्मनिमायाख्यपाशे ॥
ग्रन्थिफल । पु । शाकुरण्डवृक्षे ॥ मदनवृक्षे ॥ कपित्थवृक्षे ॥
ग्रन्थिभेद । पु । गँठकटा इति भाषा प्रसिद्धे तस्करविशेषे । य पटप्रान्तस्थित सुवर्णादिकं ग्रन्थिमोचनेन चोरयतिसइत्यर्थः ॥
ग्रन्थिमान् । पु । अस्थिसंहारिणि । हाडजोडा इति भाषा ॥ त्रि । ग्रन्थियुक्ते ॥ ग्रन्थिरस्यस्यास्तीत्यर्था । मतुप् ॥
ग्रन्थिमत्फल । पु । लकुचे ॥
ग्रन्थिमूलम् । न । गृञ्जने । शिखिमूले ॥
ग्रन्थिमूला । स्त्री । मालादूर्वायाम् ॥
ग्रन्थिल । पु । करीरद्रुमे ॥ विकङ्कततरौ ॥ तण्डुलीयशाके ॥ छिताव स्याम् ॥ पिण्डालौ ॥ चोरकनामगन्धद्रव्ये ॥ न । पिप्पलीमूले ॥ आर्द्रके ॥ त्रि । ग्रन्थियुक्ते ॥ ग्रन्थिरस्यास्ति । सिध्मादित्वाल्लच् ॥ ग्रन्थिं लाति वा । ला० । क ॥
ग्रन्थिला । स्त्री । भद्रमुस्तायाम् ॥ गण्डदूर्वायाम् ॥ मालादूर्वायाम् ॥
ग्रन्थिवर्ण । पु । ग्रन्थिपर्णे ॥
ग्रन्थिहर । पु । अमात्ये । मन्त्रिणि ॥
ग्रन्थीकम् । न । पिप्पलीमूले ॥
ग्रसनम् । न । ग्रासे ॥ ग्रसुअदने । ल्युट् ॥
ग्रसित । त्रि । कृतग्रासे । कवलिते ॥
ग्रसिष्णु । त्रि । ग्रसनशीले ॥ न । प्रलयकाले ॥
ग्रस्त । त्रि । लुप्तवर्णपदे । असम्पूर्णोच्चारिते । अपूर्णवचसि ॥ लुप्तो वर्णः पदंवा यत्रवाक्ये पदेवा ॥ ग्रसते । ग्रसु० । क्त । यस्यविभाषेति पाक्षिक इडभाव ॥ भक्षिते । भुक्ते ॥
ग्रह । पु । अनुग्रहे ॥ निर्बन्धे । आग्रहे । अभिनिवेशे ॥ ग्रहणे ॥ रणोद्यमे ॥ पूतनादिवालग्रहे ॥ सैंहिकेये ॥ उपरागे । राहुकर्तृकचन्द्रादिकर्मकग्रहणरूपक्रियायाम् ॥ सोमादिपात्रे ॥ यथा । सौभामण्यां सुराग्रहान् गृह्णाति ॥ सूर्यादिनवसु

